# अद्य विरामः किमर्थम् ?

| | |
|---|---|
| रविः - किम् अद्य विद्यालयगमनं नास्ति ? | Are you not going to school today ? |
| देवः - न । अद्य विरामः। | No. Today it's holiday. |
| र - अद्य तु गुरुवासरः खलु ? विरामः किमर्थम् ? | Today is Thursday isn't it ? Why is it a holiday for you ? |
| दे - अद्य अन्तर्विद्यालयीयस्पर्धाः प्रवर्तन्ते । | Today we have Inter-school Competation. |
| र - भवान् स्पर्धायां भागं न गृहीतवान् ? | Why are you not taking part in the competations ? |
| दे - विद्यालयीयस्पर्धायां भागः गृहीतः आसीत् । किन्तु अहं चितः न अभवम् । | I took part in the inter class competations, but I was not selected for this. |
| र - स्पर्धाकार्यक्रमं द्रष्टुं भवान् नगच्छति वा ? | Don't you like to attend ? |
| दे - अपराह्णे गमिष्यामि । यतः अन्तिमस्पर्धाः सायं भविष्यन्ति । प्रातः उपान्त्यस्पर्धाः प्रचलिष्यन्ति । | I will go in the afternoon. Final round will be conducted in the evening. Only preliminary rounds will be there in the morning. |
| र - स्पर्धा कुत्र प्रवर्तते ? | Where will the competations be held ? |
| दे - राष्ट्रियविद्यालयस्य क्रीडाङ्गणे । | They will be condected in the play ground of National School. |
| र - भवतः विद्यालयस्य छात्राः पारितोषिकं प्राप्नुयुः वा ? | Do you think your school students can win prizes in the competation ? |
| दे - निश्चयेन । धावनस्पर्धासु द्वित्राणि पारितोषिकाणि प्राप्येरन् । कबड्डीक्रीडायाम् अपि पारितोषिकं निरीक्ष्यते । | Certainly. We are expecting 2 or 3 prizes in running race and also in kabadi. |
| र - स्पर्धाः कदा समाप्ताः भवेयुः ? | When will the competations be over ? |
| दे - सायं सप्तवादनतः पूर्वम् । | Before 7 o' clock in the evening. |



# चन्दमामा

जनवरी -१९९७



## अन्तरङ्गम्


| | |
|---|---|
| वार्ताविशेषः .... | ९ |
| विष्णुभट्टकथा .... | १० |
| रूपधरस्य प्रवासः -१७ .... | १७ |
| शापात् मुक्तः विरुथः .... | २३ |
| गुणशीलस्य उपवासः .... | २५ |
| साष्टाङ्गनमस्कारः .... | ३२ |
| समुद्रतीरप्रयाणम् - १३ .... | ३३ |
| नित्यानन्दः .... | ३७ |
| चन्दमामायाः सुवर्णसमयः-७ .... | ४१ |
| महाभारतम् - ३० .... | ४५ |
| रसवार्ताः .... | ५२ |
| चन्दमामानुबन्धः - ९७ .... | ५३ |
| महादोषः कः ? .... | ५६ |
| अमावास्यापिशाचाः .... | ५७ |
| कारणस्य कारणम् .... | ६३ |
| चित्रशीर्षिकास्पर्धा .... | ६६ |





प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००




# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'



## विद्यालयेषु राजकीयप्रवेशः

सर्वैः बालकैः पालकैः च १९९६तमं वर्षं सदा स्मरणीयम् अस्ति । यतः अस्मद्देशस्य केनचित् उच्चन्यायालयेन कश्चन चारित्रिकः निर्णयः दत्तः अस्ति यत् विद्यालयेषु राजकीयप्रवेशः सर्वथा निषिद्धः इति । विद्यालयानां नित्यव्यवहारे राजकीयसंस्थाभिः हस्तक्षेपः न करणीयः इति तेन न्यायालयेन सूचितम् अस्ति । एतदनुसृत्य अन्यराज्यीयाः पोषकाः अपि एतादृशं निर्णयं प्राप्तुं स्वप्रदेशस्य न्यायालयं गन्तुम् अर्हन्ति ।

एषु दिनेषु विद्यार्थिप्रतिनिधि-निर्वाचने राजकीयपक्षाः कञ्चित् छात्रप्रतिनिधिं विशेषतः प्रोत्साहयन्ति इति तु सर्वविदितः विषयः । ते पक्षाः विद्यालयाभ्यर्थिने न केवलं करपत्र-भित्तिपत्र-ध्वज-वाहनादिसाहाय्यं कुर्वन्ति, अपि तु प्रभूतं धनम् अपि यच्छन्ति । पूर्वं तु विद्यालयीय-निर्वाचनानि सरलरीत्या प्रचलन्ति स्म । इदानीं तु तानि विधानसभादि-निर्वाचनतुल्यानि इव एव आभान्ति । हिंसादयः अपि तत्र बहुधा सम्भवन्ति । अग्रे प्रतिनिधिसभागोष्ठीषु अपि एषा एव कथा ।

विद्यालयप्रमुखाः एतत्सर्वं मूकसाक्षितया असहायकतया च पश्यन्तः भवन्ति । विद्यालयीयाः एव विद्यालयपरिसरात् बहिः यदा अन्याय्यव्यवहारम् आचरन्ति तदा तु विद्यालयप्रमुखाः सर्वथा असहायाः भवन्ति । यदा छात्राः पठनार्थम् अल्पम् अपि समयं न प्राप्नुवन्ति व्ययीकुर्वन्ति वा, तदा एव तेषां पालकाः एतद्विषये अल्पम् अवधानं यच्छन्ति इव ।

छात्रेषु नायकत्वगुणस्य वर्धनार्थम् एव विद्यार्थिसङ्घटनानि सन्ति इति तु सत्यम् एव । किन्तु सर्वे एतत् तु विस्मरन्ति यत् यः नायकः भवितुम् इच्छति सः स्वस्य विद्या-प्रतिभा-सामर्थ्यादीनां द्वारा एव तत् स्थानं प्राप्नुयात् इति । सः कति करपत्राणि वितीर्णवान्, कियत् धनं व्ययीकृतवान् इत्यादीनाम् अंशानाम् आधारेण नायकत्वनिर्णयः न भवेत् खलु ?

सर्वशालाव्यवस्थापकानां कृते उच्चन्यायालयेन 'दश विधयः' दत्ताः सन्ति, यत्र च निर्दिष्टम् अस्ति यत् यदि विद्यालयपरिसरे केनचित् कारणेन हिंसादिकं प्रचलति तर्हि तन्निवारणार्थम् आरक्षकसाहाय्यम् अपि स्वीकर्तुं शक्यते इति । शैक्षणिकसंस्थासु शान्तेः अनुशासनस्य च पालनं यथा स्यात् तथा करणं सर्वकारस्यापि कर्तव्यम् इति तेन न्यायालयेन परोक्षतया सूचितम् अस्ति ।

विद्यालयः ज्ञानप्रसारस्यैव स्थलं यथा स्यात् तथा करणं छात्राणाम् एव विशेषकर्तव्यं भवति इति तु सत्यम् एव ।

**'नववर्षं नवं हर्षं वितनोतु शुभं चिरम् ।'**

सम्पुटः - १३ जनवरी - १९९७ सञ्चिका - १०

प्रतिकृतिमूल्यं रू. ७.०० * वार्षिकं ग्राहकशुल्कं रू. ७२.००



# पोलियो-मुक्त भारत

लक्ष्य की प्राप्ति दूर नहीं
अगला क़दम होगा




राष्ट्रीय असंक्रमीकरण के दिन:

## दिसंबर ७, १९९६
## जनवरी १८, १९९७

माता पिताओं से विनती

शिशु की तबीयत के ठीक न होते हुए भी दस्त होते हुए भी इसके पहले भी शिशु को पोलियो टीका-द्रव्य दिये जा चुके हों, फिर भी

**सौ फ़ी सदी सुरक्षा सुनिश्चित करने**



**याद रखें**

अपने बच्चों को (पाँच साल से कम)
असंक्रमीकरण की कक्षिका पर ले जाएँ

**दो अतिरिक्त मौखिक पोलियो**
**टीका-द्रव्य लेने**
**राष्ट्रीय असंक्रमीकरण के दिन**



हमारे देश का भविष्य हमारे
शिशुओं के स्वस्थ जीवन
पर आधारित है।




**पोलियो मुक्त भारत का**
**सृजन करने हम अपने**
**प्रयत्न ज़ारी रखें।**
**२००० ए.डि. तक**



## वार्ताविशेषः -

# शान्तिनिमित्तं नोबेल्पारितोषिकम्

इण्डोनेशियास्थस्य लघुद्वीपस्य नाम टैमोर् । एतस्मिन् द्वीपे शान्तिः इदानीम् अपि अस्थिरा अस्ति । एतद्द्वीपवासिनः स्वातन्त्र्यं प्राप्तुं यथा शक्नुयुः, अत्र शान्तिः स्थिरीकृता यथा स्यात् तथा कर्तुम् अहिंसामार्गेण कार्यरतयोः उभयोः नायकयोः कृते नोबेल्-शान्ति-पारितोषिकं दातव्यम् इति निर्णायकसमित्या निर्णीतम् अस्ति । टैमोर् बिषप् कार्लोस् पिलिप्बोलो, प्रवासिजीवनं यापयन् स्वातन्त्र्यार्थं परिश्रमं कुर्वन् 'टैमोर्'नायकः जोस् रोमस् होर्ता च एतत् पारितोषिकं स्वीकरिष्यतः ।

पञ्चाधिकदशकानि यावत् उत्तरटैमोर्द्वीपः पोर्चुगीस्जनानाम् अधीनः आसीत् । द्वितीयजागतिकयुद्धानन्तरं टैमोर्जनाः अपि स्वातन्त्र्यार्थं प्रयत्नम् आरब्धवन्तः । १९७५तमे स्वातन्त्र्ययुद्धं पराकाष्ठां गतं, यतः पोर्चुगीस्जनाः अधिकारपरिवर्तनार्थं कामपि व्यवस्थाम् अकृत्वा अनिरीक्षितरूपेण द्वीपं परित्यज्य गन्तव्यम् इति निर्णीतवन्तः आसन् । तत्काले स्वातन्त्र्यसङ्ग्रामे रता वामसिद्धान्तीया फ्रिटेलिन्संस्था राजधानी दिलीतः स्वातन्त्र्यम् उद्घोषितवती । किन्तु इण्डोनेशिया उत्तरटैमोर्स्वातन्त्र्यं न अङ्गयकरोत् । फ्रिटेलिन्निग्रहार्थं तया सैन्यं प्रेषितम् । तदा प्रवृत्ते युद्धे २,००,००० टैमोर्जनाः प्राणैः वियुक्ताः अभवन् । १९७६तमे वर्षे इण्डोनेशिया एतं द्वीपं २७तमसदस्यराज्यत्वेन अकल्पयत् ।

किन्तु विश्वसंस्थया उत्तरटैमोर्द्वीपः इण्डोनेशियाभागत्वेन नैव परिगणितः अस्ति ।

१९९१तमेवर्षे नवम्बर्मासस्य १२ दिनाङ्के राजधान्यां दिलीनगरे मानवाधिकारकार्यदर्शी मृतस्य कस्यचित् निमित्तं सन्तापसूचकसभाम् आयोजितवान् आसीत् । तस्यां सभायां ३००० जनाः उपस्थिताः आसन् । तान् अभिलक्ष्य इण्डोनेशियासर्वकारेण गोलकास्त्रप्रयोगः कृतः । ततः ५० अधिकजनाः मरणं प्राप्तवन्तः । फ्रिटेलिन्नायकः सनाना गुस्मावो कारागारे स्थापितः ।

टैमोर्नायकः रामोस्होर्ता १९७५तमे वर्षे देशं परित्यज्य स्वेच्छासञ्चारम् आरब्धवान् । तथापि सः देशस्य स्वातन्त्र्यार्थं तु निरन्तरं प्रयतमानः आसीत् । सः बहूनि वर्षाणि यावत् विश्वसंस्थायाम् अनधिकृतरूपेण उत्तरटैमोर्प्रतिनिधिः आसीत् । 'एवं स्थिते अपि विश्वसंस्थया टैमोरं प्रति कश्चन परिवीक्षकः अपि न प्रेषितः' इत्यतः खिन्नः सः न्यूयार्क्नगरं परित्यज्य आष्ट्रेलियां गतः । तत्र सः उत्तरटैमोर्द्वीपस्य अन्ताराष्ट्रियप्रतिनिधिः सन् वसति स्म ।

इण्डोनेषिया अतिविशालेषु मुस्लिंराष्ट्रेषु अन्यतमः । तथापि टैमोर्द्वीपे क्रैस्तमतीयाः ८०% सन्ति । १९८३तमे वर्षे इण्डोनेशियासैन्यं यदा प्रतिगतं तदा बिषप्-बेलो विश्वसंस्थां प्रति पत्रं लिखितवान् यत् सदस्यत्वेन स्वीकारः भवेत् अस्मद्देशस्य इति । विश्वसंस्थायाः उत्तरं यावत् न आगतं ततः पूर्वम् एव इण्डोनेशियादेशस्य अधिकारिणः बिषप्बेलोसहकारिणः बहून् कारागारे स्थापितवन्तः । ततः आरभ्य उत्तरटैमोर्वासी बिषप्बेलो, प्रवासी रामोस्होर्ता च उत्तरटैमोर्स्वातन्त्र्यार्थं न्याय्यमार्गेण शान्त्या प्रयत्नं कुर्वन्तौ स्तः । ताभ्यां कृतस्य परिश्रमस्य निमित्तं नोबेल्शान्तिपारितोषिकस्य दानम् उद्घोषितम् अस्ति ।







# विष्णुभट्टकथा

चन्दनपुरं किञ्चन लघु संस्थानम् । तस्य संस्थानस्य अधिपतिः कमलचन्द्रः । सः कवीन्, पण्डितान्, कलाविदः च आदरेण पश्यन् 'उत्तमः अधिपतिः' इति ख्यातिं प्राप्तवान् आसीत् ।

मुरलीनाथः चन्दनपुरसंस्थानस्य प्रख्यातेषु कविषु अन्यतमः । आत्मनः कविताशक्त्या विवरणचातुर्येण च सः कमलचन्द्रस्य आत्मीयतां सम्पादितवान् आसीत् । मुरलीनाथस्य उत्कर्षम् अन्ये कवयः न सहन्ते स्म । लोकानुभवेन वयसा च मुरलीनाथस्य अपेक्षया ये ज्येष्ठाः आसन्, ते एतं द्विषन्ति स्म ।

गच्छता कालेन मुरलीनाथस्य विवाहः अभवत् । मुरलीनाथस्य पत्नी चन्दनपुरतः किञ्चिद्दूरे विद्यमानस्य गौरीपुरस्य रामचन्द्रस्य अद्वितीयपुत्री आसीत् । तस्याः नाम गीतादेवी ।

विवाहानन्तरम् अल्पकालाभ्यन्तरे एव गीतादेवी मुरलीनाथस्य अन्तरङ्गस्य भावं ज्ञात्वा दिग्भ्रान्ता अभवत् । यतः भावुकस्य उत्तमस्य चापि मुरलीनाथस्य मनसि स्त्रीणां विषये अनादरः तया दृष्टः । एतं विषयम् अज्ञात्वा द्वित्रवारं मुरलीनाथस्य काव्य-रचनसमये सा मध्ये किमपि उक्तवती आसीत् । तदा मुरलीनाथः पत्नीं तर्जयन् ततः प्रेषितवान् आसीत् ।

दिनानि गतानि । धनुर्मासः आरब्धः । पण्डितः रामचन्द्रः पुत्रीं नेतुं जामातृगृहम् आगत्य 'सपत्नीकः मम गृहम् आगच्छतु' इति मुरलीनाथं निमन्त्रितवान् ।

मुरलीनाथः श्वशुरस्य आह्वानम् अङ्गीकुर्वन् "इदानीं भवान् आत्मना सह गीतादेवीं नयतु । अहं पर्वदिने आगमिष्यामि" इति उक्तवान् । गीतादेवी पित्रा सह मातृगृहं गतवती ।

'भामहः'

द्वित्राणां दिनानाम् अनन्तरं मुरलीनाथः यथावत् सभायां काव्यवाचनं कुर्वन् आसीत् । प्रकृतिसौन्दर्यं कवितायाः विषयः आसीत् ।

अत्यन्तभावुकतया काव्यं पठन्तं मुरलीनाथम् उद्दिश्य अनिरीक्षिततया कमलचन्द्रः - ''कविवर्य ! आ बहोः कालात् भवतः काव्यं शृण्वन् अस्मि । भवान् सर्वदा अपि प्रकृतेः एव वर्णनं करोति । भवतः काव्ये सुन्दरं वनं, जलं, पिकस्य कूजनम् इत्यादयः एव विषयाः भवन्ति । जनाः प्रकृतिं, सृष्टिकर्तारं च अभिनन्दन्ति । भगवतः प्रतिनिधिः महाराजः अपि प्रजानां, प्राणिनां च पालनं करोति । 'राजा प्रत्यक्षदेवता' इति स्मृतयः वदन्ति । किन्तु भवान् महाराजस्य एतत् वैशिष्ट्यं न श्लाघते । तस्य स्पर्शम् अपि न करोति । एतस्य किं कारणम् ?'' इति पृष्टवान् ।

एतम् अनिरीक्षितं प्रश्नं श्रुत्वा मुरलीनाथः दिङ्मूढः अभवत् । महता चिन्तनेन अपि सः उत्तरं दातुं न शक्तवान् । तस्य कारणं तदीयम् आन्तर्यम् एव आसीत् ।

धनं सम्पादयितुं महाराजस्य सेवां कुर्वतः अपि मुरलीनाथस्य मनसि महाराजस्य विषये विशेषादरः तु न आसीत् । 'महाराजः कविषु महान्तम् आदरं प्रदर्शयन् भवति चेदपि तस्मिन् महान् अहङ्कारः तु भवति एव' इति मुरलीनाथस्य चिन्तनम् आसीत् ।

'करुणामयः रक्षकः च साक्षात् भगवान्



एकः एव' इति मुरलीनाथः दृढतया विश्वसितवान् आसीत् । एतस्मात् कारणात् एव मुरलीनाथः भगवन्तं तस्य सृष्टिं च अधिकृत्य एव काव्यस्य रचनां करोति स्म, न अन्यविषयम् अधिकृत्य ।

मुरलीनाथस्य अधैर्यम् अनुत्तरं च दृष्ट्वा वयोवृद्धः कविः गङ्गभट्टः - ''प्रभो ! एषः कश्चन लघुप्रश्नः । एतस्य अपि उत्तरं दातुम् अशक्तः अस्ति मुरलीनाथः । अतः मम तु भासते यत् भवति एतस्य सद्भावना नास्ति इति'' इति उक्तवान् ।

गङ्गभट्टस्य वचनानि श्रुत्वा कमलचन्द्रस्य महान् कोपः आगतः । ''भोः ! मुरलीनाथ ! दैनन्दिनस्य वेतनस्य प्राप्त्यर्थम् अत्र आगत्य भवता मनसः वञ्चनं करणीयं नास्ति । भवान् मत्तः धनसाहाय्यं



खलु अपेक्षते ? तदर्थं प्रतिदिनं भवतः गृहं प्रति अहम् एव भक्ष्यभोज्यादिकं प्रेषयिष्यामि । तत् खादित्वा सन्तोषेण इष्टानुसारं काव्यं रचयतु'' इति कोपेन उक्तवान् ।

सभायां विद्यमानानां सर्वेषां पुरतः उक्तानि कमलचन्द्रस्य कठोरवचनानि श्रुतवतः मूरलीनाथस्य अपमाननम् अभवत् । किमपि उत्तरं दातुम् अशक्तः सः महाराजं नमस्कृत्य शिरः अवनमय्य सभातः निर्गतवान् ।

राजास्थाने प्रवृत्तम् एतत् अपमाननम् एव मुरलीनाथस्य मनसि पुनः पुनः आवर्तते स्म । अतः सः रात्रौ निद्रां कर्तुम् अपि न शक्तवान् ।

राजभवनतः आगतं भक्ष्यं भोज्यं च विषम् इव भासते स्म । अतः किमपि न खादति स्म सः । एवं निद्राम् आहारं च विना मनोनिग्रहं कर्तुं सर्वथा अशक्तः मुरलीनाथः सप्ताहाभ्यन्तरे एव नितरां कृशकायः अभवत् ।

अथ कदाचित् मुरलीनाथः गृहं त्यक्त्वा मध्याह्नसमये ग्रामसीमापर्यन्तं गतवान् । तत्र विद्यमानस्य कस्यचित् वृक्षस्य अधः शयनं कृतवान् । परितः उद्यानम् आसीत् । उद्याने एका झरी अपि प्रवहति स्म । सुखकरवातावरणेन मुरलीनाथस्य श्रान्तता दुरीकृता अभवत् । महाराजस्य निन्दां श्रुत्वा खेदम् अनुभवतः मुरलीनाथस्य आत्मविश्वासः जागारितः अभवत् । नवोत्सहं प्राप्तवान् सः 'पुनः महाराजस्य सान्निध्यं कथं सम्पादयामि' ? इति चिन्तयन् उपविष्टवान् आसीत् ।

तस्मिन् समये कश्चन युवकः मन्दहासपूर्वकं तस्य समीपम् आगत्य तं नमस्कृतवान् ।

मुरलीनाथः अपि तं नमस्कृत्य - ''भवान् कः ? कुतः आगतवान् भवान्'' इति पृष्टवान् ।

तदा युवकः हसन् - ''मम नाम विष्णुभट्टः इति । अहं भवतः पत्न्याः गीतादेव्याः मातृगृहस्य प्रतिवेशी अस्मि । विवाहसमये भवन्तं दृष्टवान् आसम्'' इति उक्तवान् ।

मुरलीनाथः शिरः चालयन् मौनम् आश्रितवान् आसीत् ।

''धनुर्मासससमये आस्थाने भवतः विशेषकाव्यवाचनं भविष्यति इति गीतादेवी

उक्तवती । तत् श्रोतुम् आगतः अहम् । भवतु, अस्मिन् समये अनिरीक्षिततया किमर्थम् अत्र आगतवान् भवान् ?'' इति विष्णुभट्टः पृष्टवान् ।

मुरलीनाथः तत्क्षणमेव उत्तरं दातुं न शक्तवान् । तदा विष्णुभट्टः एव पुनरपि - ''किमर्थम् इति न जाने, भवान् अशान्त्या अस्ति इति भाति मम । भवति खेदस्य उत्पादिका कापि घटना सञ्जाता वा ?'' इति पृष्टवान् ।

विष्णुभट्टस्य आत्मीयतापूर्णं व्यवहारं दृष्टवतः मुरलीनाथस्य मनसि अभासत यत् प्रवृत्तं सर्वं निवेदनीयम् इति । यतः विष्णुभट्टः मुरलीनाथस्य काव्यवाचनं श्रोतुम् आस्थानं प्रति प्रस्थितवान् आसीत् । अतः मुरलीनाथः विष्णुभट्टं प्रवृत्तं सर्वं विस्तरेण निवेदितवान् ।

मुरलीनाथस्य कथनानन्तरं विष्णुभट्टः हसन् - ''अहं भवतः समस्यायाः परिहारं वदामि वा ?'' इति पृष्टवान् ।

''अस्तु । वदतु तावत्'' इति उक्तवान् मुरलीनाथः ।

''कविवर्य ! महाराजस्य विषये भवतः मनसि या दुर्भावना अस्ति सा आदौ अपनेतव्या । महाराजस्य दर्पः अहङ्कारः च सहजः । किन्तु तावता सः कवीन् उपेक्षया पश्यति इति न । प्राचीने काले बहवः राजानः प्रतिभां पुरस्कुर्वन्तः सरस्वतीपुत्राणां पादौ स्वयं क्षालितवन्तः, सुवर्णाभरणादिभिः पुरस्कृतवन्तः च दृश्यन्ते । केचन तु कवीन् सरस्वतीस्वरूपान् भावयन्तः शिबिकायाम् उपवेश्य शिबिकावहने स्वयं



प्रवृत्ताः अपि दृश्यन्ते । एतत्सर्वं भवता अविदितं न इति अहं भावयामि'' इति गाम्भीर्यमिश्रितेन मृदुस्वरेण उक्तवान् विष्णुभट्टः ।

विष्णुभट्टस्य वाक्ये स्थितं सत्यांशं दृष्ट्वा मुरलीनाथः आत्मावलोकनं कृतवान् । तदा स्वस्य दोषं ज्ञातवतः तस्य लज्जा अभवत् । तस्य मुखदर्शनात् एव भासते स्म यत् एतस्मिन् परिवर्तनं जातम् अस्ति इति । एतत् दृष्ट्वा विष्णुभट्टः सुमधुरतया एकां कवितां गीतवान् । कवितायाः सारांशः एवम् अस्ति -

''यमुनातीरे उपविश्य मुरलीधरः मृदुमधुरतया वेणुगानं कुर्वन् आसीत् । तस्य वेणुनादं श्रुत्वा यमुनानदी सन्तोषेण प्रवहन्ती आसीत् । परन्तु तीरे विद्यमानेषु वंशेषु



केचन वंशाः मुरलीधरस्य हस्ते विद्यमानात् वंशखण्डात् मधुरनादं श्रुत्वा ईर्ष्यां प्राप्तवन्तः आसन् । कथञ्चित् नद्याः दृष्टिः परिवर्तनीया इति चिन्तयित्वा ते आत्मानं कम्पयन्तः चित्रविचित्रशब्दान् सृजन्ति स्म । तं शब्दं श्रुत्वा यमुना जुगुप्सां प्राप्तवती । वंशानां विचित्रं शब्दं श्रुत्वा यमुना पूर्वं यं वेणुगानं मधुरतरं भावयति स्म, तम् एव इदानीं मधुरतमं भावितवती । अतः तीरे विद्यमानस्य मुरलीधरस्य समीपं गन्तुम् उत्साहेन प्रवहति स्म सा । यमुनानदी इव स्थितं गम्भीरवदनं कमलचन्द्रं सः मुरलीधरः रक्षतु ।''

विष्णुभट्टस्य कवितां श्रुत्वा मुरलीनाथः स्फूर्तिं प्राप्य आनन्दपरवशः सन् अविदिततया एव करताडनं कृतवान् ।

''उत्तमम् । विष्णुभट्ट ! निसर्गस्य वर्णने अहमेव श्रेष्ठः इति मम मनसः कोणे कुत्रापि कश्चन अहङ्कारः आसीत् । सः समूलं नष्टः अभवत् । अपूर्वा प्रतिभा भवतः । निरूपणशैली अपि अपूर्वा एव'' इति हसन् ससन्तोषं विष्णुभट्टम् उक्तवान् मुरलीनाथः ।

तदा विष्णुभट्टः - ''एतां कवितां भवतः कृते एव रचितवान् अस्मि महानुभाव !'' इति उक्तवान् ।

''भवतः कवितायाः भावार्थः मया ज्ञातः । मां दृष्ट्वा ये असूयां कुर्वन्ति स्म, ते एव महाराजस्य मनसः परिवर्तनं कृतवन्तः स्युः इति खलु भवतः आशयः ?'' इति उक्तवान् मुरलीनाथः ।

तदा विष्णुभट्टः - ''गङ्गभट्टः इत्यादयः भवतः पाण्डित्यं दृष्ट्वा असूयां कुर्वन्ति इति गीतादेवी माम् उक्तवती आसीत् । यदि तेषु इर्ष्या न स्यात् तर्हि ते सभायां भवतः अपमाननं न अकरिष्यन्'' इति उक्तवान् ।

''भवतः कथने सत्यांशः स्यात् । तावतां पण्डितानां मध्ये महाराजः यदा प्रश्नं कृतवान् तदा किम् उत्तरं वक्तव्यम् इति मया न ज्ञातम् । इदानीं पुनः आस्थानं गत्वा भवता उक्ता कविता महाराजस्य पुरतः मया वक्तव्या इति खलु भवतः अभिप्रायः ?'' इति मुरलीनाथः पृष्टवान् ।

''सत्यं महानुभाव ! किञ्चित् रूपपरिवर्तनं कृत्वा भवान् एकान्ते महाराजेन मिलित्वा काव्यवाचनं करोतु । कवितायाः अन्तिमः भागः 'महाराजस्य विषये भवतः अनादरः कोऽपि नास्ति' इति

भावम् अभिव्यञ्जयति'' इति मुरलीनाथम् उक्तवान् विष्णुभट्टः । किन्तु मुरलीनाथः मौनं तिष्ठन् चिन्तामग्नः इव दृश्यते स्म ।

'एतस्य श्रवणस्य अनन्तरम् अपि कवितायाः स्वीकारः करणीयः वा न वा इति सन्देहं प्राप्तवान् अस्ति मुरलीनाथः' इति जानन् विष्णुभट्टः पुनः उक्तवान् - ''महानुभाव ! अन्येन कविना रचितं काव्यं कथम् अहं स्वीकरिष्यामि इति खलु भवतः सन्देहः ? अलं सन्देहेन । एषा कविता भवतः कृते एव विशेषतया मया रचिता अस्ति । भवान् गीतादेवीं यथा स्वीकरोति तथैव एतां कविताकन्याम् अपि स्वीकरोतु'' इति ।

तथाऽपि मुरलीनाथः आत्माभिमानस्य कारणतः कवितास्वीकारे अनादरं प्रकटयन् आसीत् ।

'एतावत् उक्तं चेत् अपि एषः कवितास्वीकारं न अङ्गीकरोति खलु । कथम् अङ्गीकारणीयम्' इति विष्णुभट्टः क्षणकालं चिन्तितवान् । ततः सः शिरसि विद्यमानम् उष्णीषम् अपनीतवान् । मुखे स्थितं श्मश्रु अपि निष्कासितवान् ।

तस्मिन् क्षणे उत्फुल्लकमलम् इव भासमानां मन्दहासमूर्तिं पुरतः दृश्यमानां गीतादेवीं दृष्ट्वा मुरलीनाथः स्तम्भीभूतः अभवत् । क्षणाभ्यन्तरे आत्मानं निगृह्य सः - ''गीते !'' इति आश्चर्येण सन्तोषेण च उक्तवान् ।

तदा गीतादेवी हसन्ती - ''आर्य !'' इति स्त्रीस्वरेण उक्त्वा पुनरपि पुरुषस्वरम् आश्रित्य किञ्चित् उक्त्वा ततः



सहजस्वरेण - ''सभायां भवतः अपमानः कृतः इति, ततः भवान् सभातः बहिः निर्गतवान् इति च मम पितुः शिष्याः माम् उक्तवन्तः । झटिति अहं ततः प्रस्थितवती । मम पिता अपि मया सह आगन्तुम् उद्युक्तः आसीत् । परन्तु अहमेव 'मास्तु' इति तम् उक्तवती । अहं सहजतया आगत्य कामपि सूचनां ददामि चेत् भवान् न अङ्गीकरोति इति भयेन अहं पुरुषवेषं धृत्वा अत्र आगतवती । मम कवितायाः साहाय्येन निस्सङ्कोचं स्वसमस्यापरिहारं प्राप्नोतु भवान्'' इति उक्तवती ।

आश्चर्येण तस्याः वचनानि शृण्वन् स्थितः मुरलीनाथः अनङ्गीकारपूर्वकं शिरसः चालनेन कवितास्वीकारे असम्मतिं प्रदर्शितवान् ।

'एतावत् कृतं चेत् अपि एषः मदीयां कवितां स्वीकर्तुं सिद्धः नास्ति खलु ?' इति चिन्तयित्वा खिन्ना गीतादेवी – ''किमर्थम् आर्य ? भवान् किमर्थम् एतां कवितां न स्वीकरोति ?'' इति सगद्गदं पृष्टवती ।

मुरलीनाथः क्षणकालस्य मौनस्य अनन्तरं – ''गीते ! भवत्या रचिता कविता स्वीकरणीया वा न वा इति चिन्तनं मम मौनस्य कारणं न । मया किं करणीयम् इति अजानन् अहं मौनं स्थितवान् अस्मि । स्त्रीणां विषये उपेक्षा, महाराजे अनादरः, सभायां जातः अपमानः च इति एते त्रयः अंशाः मयि सुदृढं स्थिताः कलङ्कवृक्षाः । एतान् त्रीन् अपि वृक्षान् एकेन एव बाणेन पातितवती भवती निश्चयेन असामान्या । अस्मिन् काले भवती एव वदतु – मया किं करणीयम् इति । अहं भवतीं शरणं गतः अस्मि । भवतीं, भवत्याः सज्जनतां च पुरस्कर्तुं शरणागतेः ऋते न अन्यः मार्गः इति अहं भावयामि'' इति उक्त्वा पत्न्याः पादौ ग्रहीतुम् उद्युक्तः अभवत् ।

पत्यौ जातं परिवर्तनं दृष्ट्वा गीतादेवी आनन्दाश्रूणि स्रावयन्ती तदीयं पादपतनं निवारयन्ती – ''अलम् अनुचितकृत्येन । भवान् मम वचनम् अङ्गीकृतवान् यत् तेनैव अहं पुरस्कृता अस्मि । भवति यत् महत् परिवर्तनं जातं ततः तु अहं स्वर्गसुखम् एव प्राप्तवती अस्मि'' इति उक्तवती ।

तदनन्तरं तौ द्वौ अपि निसर्गसौन्दर्यस्य आस्वादनं कृत्वा राजधानीं प्रति प्रस्थितवन्तौ ।

तदनन्तरदिने मुरलीनाथः वेषं परिवर्त्य गीतादेव्या उक्तं कवितां श्रावयित्वा पुनः महाराजस्य आदरं प्राप्तवान् ।

केषाञ्चित् दिनानाम् अनन्तरं मुरलीनाथः महाराजस्य पुरतः पूर्वं प्रवृत्तं सर्वम् उक्तवान् । पत्न्याः गुप्तवेषधारणं, कविता-वाचनं, ततः स्वस्मिन् जातं परिवर्तनं च महाराजं विस्तरेण निवेद्य सः पत्नीं श्लाघितवान् । महाराजः अपि सर्वं श्रुत्वा सन्तुष्टः सन् गीतादेव्याः पाण्डित्यं श्लाघितवान् ।

गच्छता कालेन मुरलीनाथः गीतादेव्याः सहकारेण उत्तमकाव्यानि रचितवान् । परन्तु सर्वेषां काव्यानां शीर्षिकायाः अधः ''विष्णुभट्टविरचितम्'' इति लिखितवान् ।






# १७

['यः मम पतिः इव द्वादशपरशुमूलरन्ध्रमार्गेण बाणं सम्प्रेष्य लक्ष्यच्छेदनं करोति सः एव मया परिणीयते' इति पद्ममुखी निश्चितवती । वृद्धवेषेण आगतं पतिम् अनभिजानती सा तस्य पुरतः एव स्वस्य निर्णयम् उद्घोषितवती । अनन्तरदिने, गृहम् आक्रान्तवतां दुष्टानां पुरतः अपि एतं निर्णयं श्रावयित्वा रूपधरीयं धनुः बाणान् च सर्वेषां पुरतः स्थापितवती । तदनन्तरम् ....]

दुष्टाः एकैकशः आगत्य धनुषि ज्यां योजयितुं प्रयत्नं कृत्वा असाफल्यं प्राप्य लज्जया शिरः अवनमय्य प्रतिगताः । एतत् सर्वं दृष्ट्वा दुर्बुद्धिः काळम् आहूय – ''भोः, धनुर्दण्डं मेदसा विलिप्य अग्निना उष्णीकरोतु'' इति सूचितवान् । काळः तथैव कृतवान् । किन्तु ततः अपि किमपि प्रयोजनं न सिद्धम् ।

एवं बाणप्रयोगविषये एव ते दुष्टाः विविधप्रयत्नान् यदा कुर्वन्तः आसन् तदा वराहपालकः गोपालकः च ततः निर्गतवन्तौ आस्ताम् । तौ अनुसृत्य रूपधरः अपि बहिः गतवान् । तौ स्वसमीपम् आहूय रहसि – ''भवतां स्वामी रूपधरः यदि प्रत्यागमिष्यति तर्हि कीदृशं साहाय्यं करिष्यन्ति भवन्तः ? दुष्टान् विरुध्य प्रवर्तमाने युद्धे किं रूपधरस्य साहाय्यं कर्तुम् अर्हन्ति भवन्तः ? स्वाभिप्रायं निस्सङ्कोचं वदन्तु तावत्'' इति उक्तवान् ।

''वयं रूपधरस्य साहाय्यं निश्चयेन



करिष्यामः'' इति सशपथम् उक्तवन्तौ तौ ।

ततः रूपधरः - ''अहम् एव अस्मि रूपधरः । मम प्रत्यागमनात् सन्तुष्टौ भवन्तौ उभौ एव इति भावयामि अहम् । एतत् कालकम् एव मम रूपधरत्वं प्रमाणीकरोति'' इति वदन् पादे स्थितं कालकं दर्शितवान् ।

आगतः स्वामी एव इति ज्ञात्वा तौ नितरां सन्तुष्टौ । तयोः नेत्राभ्याम् आनन्दाश्रूणि निर्गतानि ।

तदा रूपधरः उक्तवान् - ''आनन्देन रमणार्थं न एषः कालः । युद्धक्षणः सन्निहितः अस्ति । आदौ अहम् अन्तः गच्छामि । 'धनुः दीयताम्' इति वदामि । किन्तु ते धनुः न यच्छन्ति । तदा वराहपालकः धनुः आनीय मह्यं दद्यात् । ततः सः स्त्रीणां समीपं गत्वा - 'भवत्यः सर्वाः प्रकोष्ठं प्रविश्य द्वारपिधानं कुर्युः । महान् कोलाहलः श्रुतः चेदपि बहिः न आगन्तव्यम्' इति सूचयेत् । ततः सुखप्राप्तिना सह गत्वा सिंहद्वारं पिधातव्यम् । सर्वम् अवगतं खलु ?'' इति ।

ततः ते एकैकशः अन्तः गत्वा स्वस्थाने स्थितवन्तः । तत्काले विपुलयोधः महता प्रयत्नेन धनुषः दण्डस्य अवनमनार्थं साहसं कुर्वन् आसीत् । सर्वथा असफलः सः निराशया उक्तवान् - ''अहो दौर्भाग्यम् अस्माकम् ! एतस्याः परिणयः प्रायः गगनकुसुमायते । रूपधरस्य अस्माकं च शक्तिविषये अजगजान्तरम् इति स्मरतः तु मम शिरः लज्जया अवनतं भवति । अस्माकम् असामर्थ्यं दृष्ट्वा जनाः किं वदेयुः इत्येव चिन्ता मम'' इति ।

एतत् श्रुत्वा दुर्बुद्धिः उक्तवान् - ''अये असहायः इव, भीरुः इव च वार्तालापं मा करोतु । पर्वदिने धनुर्बाणादीनां स्पर्शः न उचितः । अतः धनुः तत्र स्थापयतु । पुनः कदाचित् एतद्विषये चिन्तयिष्यामः'' इति ।

एषः विचारः सर्वेभ्यः अरोचत । सर्वेषां भोजनस्य अनन्तरं रूपधरः उक्तवान् - ''महाशयाः ! एतत् धनुः अहं स्प्रष्टुं किं शक्नुयाम् ? भवन्तः तु अद्य धनुषः स्पर्शं न कुर्वन्ति । मदीयशक्तेः परीक्षा करणीया इति मम प्रबला अपेक्षा । भवतां यावत् सामर्थ्यं तावत् तु मम न स्यात् अपि'' इति ।

एतत् श्रुत्वा तत्रत्याः सर्वे कुपिताः । दुर्बुद्धिः रूपधरं कोपेन पश्यन् - ''अये दुष्ट ! किं भवतः बुद्धिः अस्ति ?

सुरापानस्य फलं स्यात् एतत् । भवान् महता कष्टेन धनुर्दण्डं नमयितुं शक्नुयात् चेदपि तदनन्तरकाले प्राणैः वियुक्तः भवेत् । अस्माभिः कर्तुं यत् न शक्तं तत् कश्चित् वृद्धः कृतवान् इति यदि प्रसारः भवेत् तर्हि अस्माकं मानस्य का वा गतिः भवेत् ?'' इति उक्तवान् ।

''अये दुर्बुद्धे, अलम् अतिथेः अपमानेन । वृद्धः एषः धनुर्दण्डं नमयितुं शक्नुयात् ईत भीतिः वा भवतः ? स्पर्धायां भागग्रहणे सर्वेषाम् अधिकारः अस्ति एव खलु ?'' इति उक्तवती पद्ममुखी ।

''भयं नास्ति इति न । वृद्धः एषः समर्थः न स्यात् एव । तथापि दैवानुग्रहः यदि स्यात् तर्हि अघटितम् अपि घटेत खलु ? को वा वीरः अपमाननं सहेत ?'' इति उक्तवान् दुर्बुद्धिः ।

''अम्ब ! अहं यम् इच्छामि तस्मै धनुः दातुं मम अधिकारः अस्ति एव । मम व्यवहारस्य औचित्यं विम्रष्टुम् अत्र कोऽपि न अर्हति । भवती अन्तः गत्वा स्वकार्ये निरता भवतु'' इति उक्तवान् धीरमतिः ।

एतत् वचनं श्रुत्वा आश्चर्यं सन्तोषं च अनुभूतवती पद्ममुखी । पुत्रः एवं धैर्येण व्यवहरन् अस्ति इत्यतः तस्याः महान् सन्तोषः । सन्तोषम् अनुभवन्ती सा ततः उत्थाय स्वप्रकोष्ठं गतवती ।

अत्रान्तरे वराहपालकः रूपधराय धनुः आनीय दातुम् उद्युक्तः । एतत् दृष्ट्वा तत्रत्याः सर्वे उच्चैः कोलाहलं कृतवन्तः । तदा भीतः वराहपालकः धनुः भूमौ स्थापितवान् ।

तदा धीरमतिः - ''भोः, एतेषां व्यवहारतः भीतिः किमर्थम् ? अहम् अस्मि अत्र । धैर्येण व्यवहरतु भवान्'' इति वदन् वराहपालके धैर्यं पूरितवान् ।



एतस्मात् धैर्यं प्राप्य वराहपालकः धनुः आनीय रूपधराय दत्तवान् । ततः यत्र स्त्रियः आसन् तत्र गत्वा बहुकीर्तिम् उद्दिश्य - ''अस्माकं स्वामिनः आज्ञा अस्ति यत् सर्वाः प्रकोष्ठं गत्वा द्वारं पिधाय तिष्ठेयुः, महान् कोलाहलः श्रुतः चेदपि काऽपि बहिः न आगच्छेत् इति'' इति उक्तवान् ।

'किमर्थम् एतादृशी सूचना' इति न ज्ञातवती बहुकीर्तिः । तथापि वराहपालकस्य वचनं पालयन्ती सा अन्याभिः सह प्रकोष्ठं प्रविश्य द्वारं कीलितवती । सुखप्राप्तिः किमपि अजानन् इव व्यवहरन्



प्रमुखद्वारं पिधाय आगतवान् । रूपधरः धनुः उन्नीय परीक्षादृष्ट्या क्षणकालं दृष्टवान् । सर्वे कुतूहलेन तं पश्यन्तः आसन् ।

रूपधरः धनुर्दण्डं सम्यक् परीक्ष्य लीलया ज्यां बद्ध्वा दक्षिणहस्तेन धनुः उन्नीय वामहस्तेन ज्यां किञ्चित् आकृष्य ठङ्कारम् उत्पादितवान् । ततः मधुरगम्भीरः नादः उत्पन्नः । सर्वे दिङ्मूढाः सन्तः रूपधरं दृष्टवन्तः ।

ततः रूपधरः तूणीरात् एकं बाणं स्वीकृत्य धनुषि संयोज्य लक्ष्यम् अभिलक्ष्य परशुमूलरन्ध्रमार्गेण प्रेषितवान् । स च बाणः परशुरन्ध्रमार्गेण गत्वा लक्ष्यच्छेदनम् अकरोत् । ततः सः धीरमतिम् उद्दिश्य - ''वत्स ! धीरमते ! मया भवतः मानः रक्षितः । एते भीतिम् उत्पादितवन्तः चेदपि मम शक्तिः अकुण्ठिता एव आसीत् । इदानीं मनोविनोदः प्रचलतु नाम'' इति वदन् नेत्रसङ्केतेन किमपि सूचितवान् ।

अनन्तरक्षणे धीरमतिः एकेन हस्तेन खड्गम् अपरेण शूलायुधं च गृहीत्वा पितुः पार्श्वे स्थितवान् ।

रूपधरः शरीरस्थानि छिन्नवस्त्राणि अपनीय वीरगत्या उप्लुत्य स्वागतप्रकोष्ठ-मध्ये स्थित्वा पादसमीपे बाणान् प्रसार्य - ''वास्तविकी क्रीडा इदानीम् आरब्धा । अद्यावधि यत् लक्ष्यत्वेन न परिकल्पितम् आसीत् तत् इदानीं मम बाणप्रयोगस्य लक्ष्यम् अस्ति'' इति वदन् धनुषि बाणं संयोज्य दुर्बुद्धिं लक्ष्यीकृत्य प्रयुक्तवान् ।

दुर्बुद्धिः सुरापात्रतः सुरां स्वीकृत्य पातुम् उद्युक्तः आसीत् । तावता रूपधरेण प्रयुक्तः बाणः तस्य कण्ठे लग्नः अभवत् । सुरापात्रम् अधः अपतत् । दुर्बुद्धिः अपि अधः पतितवान् । तस्य प्राणाः गताः ।

अनन्तरक्षणे एव तत्र कोलाहलः उत्पन्नः । सर्वे आसनात् उत्थाय आयुधानां स्वीकारार्थम् इतस्ततः दृष्टवन्तः । किन्तु भित्तयः आयुधरहिताः आसन् । ''अये, अस्मान् मारयति वा भवान् ? भवन्तम् इदानीम् एव यमसदनं प्रेषयिष्यामः'' इति वदन्तः ते उच्चैः आक्रोशनं कृतवन्तः ।

रूपधरः भ्रुकुटिं वक्रीकृत्य उच्चस्वरेण उक्तवान् - ''अये कुलकलङ्काः ! अहं ट्रोय्नगरात् न प्रत्यागच्छेयम् इति निश्चितवन्तः आसन् भवन्तः । अतः एव मम गृहम् आक्रम्य अत्रत्यसम्पत्तेः दुरुपयोगे

उद्युक्ताः अभवन् भवन्तः । दास-दास्यः निर्दयं स्वसेवायां नियोजिताः । मयि जीवति, मम पत्नीं परिणेतुं प्रयत्नः अपि कृतः भवद्भिः । उच्छृङ्खलानां भवतां न पापभीतिः, न वा दैवभीतिः । भो भोः, भवतां निमित्तं यमसदनद्वारम् उद्घाटितम् अस्ति । भवतः सर्वान् यमसदनं प्रेषयितुम् एषः अहम् उपस्थितः अस्मि'' इति ।

अकस्मात् उपस्थितां विपत्तिं ज्ञातवतां तेषां मुखात् वचनानि न निर्गतानि । किञ्चित्कालाभ्यन्तरे आत्मनि धैर्यं प्रपूर्य विपुलयोधः उक्तवान् - ''भवतः कथनं सत्ययुक्तम् एव अस्ति । अनुचितः व्यवहारः अस्माभिः प्रदर्शितः । एतस्य सर्वस्य कारणम् आसीत् सः दुर्बुद्धिः एव । न केवलं भवतः पत्नीं परिणेतुम्, अपि तु भवतः पुत्रस्य मारणानन्तरं सम्पत्तिं वशीकर्तुम् अपि इच्छति स्म सः । तेन प्रेरिताः वयम् अत्र आगताः । भवतः या हानिः जाता तां वयं दातुं सिद्धाः । यावत् समग्रं परिहारधनं भवते न दीयते तावत् भवदादेशपालकाः अवश्यं भविष्यामः वयम्'' इति ।

''अयि दुष्टाः, भवन्तः यत् पापकार्यं कृतवन्तः तस्य प्राणापहरणम् एव योग्यः परिहारः । इतः पलायनार्थम् अपि नास्ति अवकाशः'' इति उक्तवान् रूपधरः ।

तदा विपुलयोधः सहचरान् पश्यन् - ''मित्राणि ! एषः अनुक्तग्राही अस्ति । वयं सर्वे सम्भूय युगपत् एतस्य उपरि आक्रमणं करवाम । सम्भूय प्रयत्नः कृतः चेत् फलं प्राप्येत एव । मार्गं गत्वा अन्यान् अपि साहाय्यार्थम् आह्वयाम । तदा एतस्य दर्पः निगृहीतः भविष्यति'' इति उक्तवान् ।

एतावत् उक्त्वा सः खड्गम् आकृष्य रूपधरम् अभिलक्ष्य आक्रमणं कृतवान् ।



ततः निमेषाभ्यन्तरे रूपधरस्य बाणः तस्य हृदयस्य च्छेदनम् अकरोत् ।

तदा अन्ये सर्वे रूपधरं ग्रहीतुम् आगतवन्तः । तेषु कांश्चन धीरमतिः शूलायुधेन प्रहृतवान् । अनन्तरं पितरम् उद्दिश्य - ''तात ! अहं भवदर्थम् एतस्य वराहपालकस्य ,निमित्तं च आयुधानि आनयामि'' इति उक्तवान् ।

''यावत् मत्समीपस्थाः बाणाः न समाप्यन्ते ततः पूर्वम् एव आयुधानि आनयतु तावत्'' इति सूचितवान् रूपधरः । धीरमतिः झटिति आयुधप्रकोष्ठं गत्वा कुन्त-शूल-शिरस्त्राणादीनि आनीतवान् । तानि गृहीत्वा चत्वारः अपि द्वारसमीपे स्थितवन्तः । बाणाः यदा समाप्ताः तदा धनुः अधः संस्थाप्य शूलायुधं गृहीतवान् रूपधरः । तस्य प्रहारतः बहवः मरणं प्राप्तवन्तः । ये सजीवम् आसन् तेषां साहाय्यं कृतवान् काळः । सः मन्दगत्या गत्वा आयुधप्रकोष्ठतः आयुधानि आनीय तेभ्यः दत्तवान् आसीत् ।

एतत् जानन् रूपधरः - ''धीरमते, कोऽपि कापि वा अस्मद्विरोधिनां साहाय्यं करोति खलु ?'' इति उक्तवान् ।

तदा धीरमतिः - ''अहो मूर्खता मम ! आयुधानयनत्वरायाम् अहम् आयुध-प्रकोष्ठस्य द्वारस्य कीलनम् एव विस्मृतवान् आसम्'' इति वदन् वराहपालकम् आयुधप्रकोष्ठस्य कीलनार्थं प्रेषितवान् ।

द्वितीयवारम् आयुधानि आनेतुं गतः काळः वराहपालकेन गृहीतः । ततः उभयपक्षयोः घोरं युद्धं प्रवृत्तम् । दैववशात् रूपधरः धीरमतिः वा विशेषतः न व्रणितौ । एतस्मिन् युद्धे देवाः रूपधरस्य पक्षम् आश्रितवन्तः आसन् । अतः विजयलक्ष्मीः रूपधरेण एव वृता । शत्रुषु उभौ भीरुस्वभावयुक्तौ सरलौ च आस्ताम् । अतः तौ सजीवं ततः प्रेषितवान् रूपधरः । स च प्रकोष्ठः शवैः पूर्णः आसीत् ।

रूपधरः वृद्धां दासीम् आहूय - ''एतं प्रकोष्ठं स्वच्छीकारयतु । शवाः बहिः अङ्गणे राशीकरणीयाः इति सेवकान् वदतु'' इति सूचितवान् । यदा सा स्वच्छीकारितवती तदा धूपगन्धेन प्रकोष्ठे निर्मलवातावरणं निर्मितवान् सः ।

*(अग्रिमसञ्चिकायां समाप्तिः)*






# शापात् मुक्तः विरुथः

उग्रतपसि निलीनस्य ध्रुवस्य तपसः भङ्गार्थम् इन्द्रः विरुथनामकं गन्धर्वं राक्षसरूपेण प्रेषितवान् ।

तस्य परपीडाप्रवृत्तिं दृष्ट्वा कुपितः कश्चन मुनिः ''भवान् वस्तुतः अपि राक्षसः भवतु'' इति शापं दत्तवान् ।

एवं विरुथः देवत्वात् वञ्चितः भूत्वा राक्षसत्वं प्राप्तवान् । शबरीनदीतीरे वसन् सः दृष्टिगोचरीभूतान् जनान् खादन् दिनानि यापयति स्म । विरुथः राक्षसत्वं प्राप्तवान् चेदपि दिव्यज्ञानात् तु वञ्चितः न आसीत् । अतः त्रिषु लोकेषु यद्यत् प्रचलति स्म तत्सर्वं ज्ञायते स्म तेन ।

शबरी-गोदावरीनदीसङ्गमे स्थिते आश्रमे केचन मुनयः वसन्ति स्म । तत्रत्याः केचन मुनिकुमारकाः कदाचित् समिधः आनेतुम् अरण्यं गतवन्तः आसन् । तत्समये विरुथः तत्र आगतवान् । तं दृष्ट्वा सर्वे मुनिकुमारकाः भीत्या पलायनं कृतवन्तः ।

किन्तु भरतः नाम बालकः भीतिम् अप्राप्नुवन् तत्रैव स्थितवान् आसीत् । तस्य धैर्यं दृष्ट्वा विरुथः आश्चर्यं सन्तोषं च अनुभूतवान् ।

ततः पलायिताः मुनिकुमारकाः आश्रम-प्रदेशं गत्वा भरतस्य पितरम् उक्तवन्तः - ''भवतः पुत्रं राक्षसः गृहीतवान् अस्ति'' इति ।

भरतस्य पिता धावन् अरण्यम् आगत्य पुत्रं बन्धितवन्तं विरुथं नमस्कृत्य प्रार्थितवान् - ''एषः मम एकमात्रपुत्रः । एतं परित्यजतु कृपया'' इति ।

''अस्तु तर्हि । किन्तु एतदर्थं कश्चन नियमः पालनीयः भवता । श्वः प्रातः अहं पुनः अत्र आगमिष्यामि । तदभ्यन्तरे मया ज्ञातुम् अशक्ये स्थले एषः गोपनीयः भवता । एतत् कर्तुं शक्तं चेत् अहं भवतः पुत्रं न

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

पीडयिष्यामि अहम्'' इति उक्तवान् विरुथः ।

भरतम् आश्रमं नीतवान् तदीयः पिता । विशिष्टेन यज्ञेन ब्रह्माणं सन्तोषितवान् । सन्तुष्टः ब्रह्मा तस्य पुरतः प्रत्यक्षः जातः । ''मम पुत्रः राक्षसस्य दृष्टिगोचरः यथा न स्यात् तथा श्वः प्रातःकालपर्यन्तं रक्षणीयः भवता'' इति ब्रह्माणं प्रार्थितवान् सः ।

एतां प्रार्थनाम् अङ्गीकृतवान् ब्रह्मा स्वलोकं गत्वा स्वस्य आसनभूतस्य कमलस्य दल-रूपेण भरतं परिवर्तितवान् ।

अनन्तरदिने आगतः विरुथः भरतस्य पितरम् उक्तवान् - ''मूर्ख ! ब्रह्मणः आसनभूतस्य कमलस्य दलरूपेण भरतः गोपितः चेत् किं मया न ज्ञायेत ? भवतु नाम, अन्यम् अवकाशं ददामि । श्वः प्रातःकालाभ्यन्तरे अन्यत्र गोपयतु पुत्रम्'' इति ।

एतत्सन्दर्भे शङ्करं सन्तोष्य पुत्रगोपनार्थं प्रार्थनां कृतवान् भरतपिता । शङ्करः भरतं कैलासं नीत्वा पुष्परूपेण परिवर्त्य पार्वत्याः कर्णे स्थापितवान् ।

अनन्तरदिने आगतः विरुथः - ''अद्य भवता कैलासे पार्वत्याः कर्णे पुष्परूपेण पुत्रः गोपितः अस्ति खलु ? अस्तु नाम । तृतीयम् अपि अवकाशं ददामि भवते । पुत्रगोपनार्थं प्रयत्नं करोतु भवान्'' इति उक्त्वा ततः निर्गतवान् ।

एतस्मिन् दिने भरतपिता महाविष्णुम् आराधितवान् । विष्णुः प्रत्यक्षः अभवत् । ब्रह्मा शङ्करः च यथा प्रार्थितौ आस्तां तथा विष्णुम् अपि प्रार्थितवान् भरतपिता । विष्णुः भरतेन सह ततः प्रस्थितवान् ।

अनन्तरदिने विरुथः आगतवान् । दिव्यदृष्ट्या त्रिषु लोकेषु अपि अवलोकितवान् सः । किन्तु कुत्रापि भरतः तेन न दृष्टः । अतः सः उच्चस्वरेण - ''भोः मुनिपुत्रक ! कुत्र अस्ति भवान् ?'' इति पृष्टवान् ।

''अत्र अस्मि'' इति भरतस्य ध्वनिः श्रुतः ।

''भवन्तं न पीडयामि । मत्पुरतः आगच्छतु तावत्'' इति उक्तवान् विरुथः ।

तत्क्षणे एव विरुथस्य हृदयं विभिद्य बहिः आगतवान् भरतः । राक्षसः प्राणैः वियुक्तः जातः । ततः तस्य शापविमोचनं जातम् । सः गन्धर्वरूपं प्राप्य भरतस्य पितरं नमस्कृत्य स्वर्गं प्रति गतवान् ।





# गुणशीलस्य उपवासः

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! एतस्मिन् घोरे श्मशाने भीकरे मध्यरात्रे भवान् यत् एतत् कार्यं कुर्वन् अस्ति तस्य प्रतिफलं कीदृशं प्राप्येत इति अहं तु न जानामि । कदाचित् फलं कथमपि न सिद्ध्येत् एव । पुनः कदाचित् अनुहितरूपेण फलं प्राप्येत अपि । एतादृशस्य कारणं किम् इति महाबुद्धिमान् अपि न जानाति । अत्र उदाहरणरूपेण गुणशीलनामकस्य कथां श्रावयामि । मार्गायासपरिहारार्थं तां कथां श्रद्धया श्रृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

रामनाथः अमृतपुरनिवासी । जनाः परस्परं वदन्ति स्म यत् रामनाथस्य गृहस्य

## वेतालकथा




पृष्ठतः स्थितायां वाटिकायां गुप्तनिधिः अस्ति इति । तस्य निधेः प्राप्त्यर्थं रामनाथः बहुधा प्रयत्नं कृतवान् आसीत् । किन्तु निधिः तेन न प्राप्तः आसीत् ।

कदाचित् कश्चन संन्यासी तस्य गृहम् आगतः । निधिविषये रामनाथेन पृष्टः सः उक्तवान् - ''संन्यासिनं सज्जनं वा भवान् दिनत्रयं यावत् गृहे भोजयतु । चतुर्थे दिने सः उपवासम् आचरतु । तदनन्तरदिने तस्य हस्ते कुद्दालं ददातु । सः यत्र खनति तत्र निधिः प्राप्यते'' इति ।

तदनन्तरदिने एव उत्तमानाम् अन्वेषणम् आरब्धवान् रामनाथः । यं सः उत्तमं भावयति स्म तं गृहं प्रति निमन्त्रयति स्म ।

एवम् आगताः रामनाथस्य गृहे वसन्तः ते दिनत्रयं समीचीनभोजनं प्राप्य चतुर्थे दिने उपवासव्रतम् आचरन्ति स्म । पञ्चमे दिने ते कुद्दालेन यदा खननं कुर्वन्ति स्म तदा निधिः तु न प्राप्यते स्म । 'अहम् उत्तमः न' इति भावयन्तः ते खेदेन प्रतिगच्छन्ति स्म । केचन तु 'संन्यासी मिथ्यावचनम् उक्तवान् स्यात्' इति वदन्ति स्म । दिनेषु गतेषु रामनाथस्य निमन्त्रणम् अङ्गीकुर्वतां सङ्ख्या न्यूना जाता ।

अथ कदाचित् सज्जनसत्कारं सूचितवान् संन्यासी एव पुनरपि रामनाथस्य गृहम् आगतवान् । तं रामनाथः प्रवृत्तं समग्रं निवेदितवान् । सर्वं श्रुत्वा संन्यासी गम्भीरस्वरेण - ''मया उक्तम् आसीत् यत् अतिथिद्वारा निर्जलोपवासः कारणीयः इति । भवता निमन्त्रिताः अतिथयः तथा कृतवन्तः आसन् वा ?'' इति पृष्टवान् ।

रामनाथेन निमन्त्रिताः निर्जलोपवासं न कृतवन्तः आसन् । केचन क्षीरं पीतवन्तः आसन् । पुनः केचन जलं पीतवन्तः आसन् । 'निर्जलोपवासः अतिथिभिः न अङ्गीक्रियेत' इति चिन्तयित्वा रामनाथः संन्यासिनं पृष्टवान् - ''श्रीमन् ! मया प्राप्यमाणनिधेः निमित्तम् अन्ये निर्जलोपवासं न कुर्युः इति भाति मम । अतः अहम् एव उपवासे प्रवृत्तः भवामि चेत् कथम् ?'' इति ।

''स्वप्रयोजनार्थं निर्जलोपवासव्रतं यदि भवान् आचरेत् तर्हि तत् स्वार्थाय एव भवेत् । तेन न किमपि प्रयोजनम् । इतः अनतिदूरे लघुनगरम् अस्ति । तत्र गुणशीलः नाम कश्चित् अस्ति । तं गृहम् आनाय्य तस्य द्वारा निर्जलोपवासव्रतं कारयतु । तेन

भवतः इष्टं सेत्स्यति'' इति उक्त्वा संन्यासी ततः निर्गतवान् ।

अनन्तरदिने रामनाथः आदिनं प्रयाणं कृत्वा सायङ्कालसमये लघुनगरं प्राप्तवान् । गुणशीलस्य गृहं तु तेन विनायासं प्राप्तम् । तत् दृष्ट्वा रामनाथः आश्चर्यचकितः । सः चिन्तितवान् आसीत् यत् गुणशीलः निर्धनः स्यात् इति । किन्तु गुणशीलस्य गृहम् इन्द्रभवनायते स्म । महता वैभवेन युक्तं तत् दासदासीभिः पूर्णम् आसीत् । गुणशीलः तत्र महातेजसा विराजते स्म । आजानुबाहुः सः उन्नतः दृढकायः च आसीत् । कौशेय-वस्त्राणि, बहूनि आभरणानि च धृतवान् सः आलयस्य महाविष्णुः इव शोभते स्म ।



रामनाथं दृष्ट्वा आसनात् उत्थाय आगतः गुणशीलः महता आदरेण स्वागतीकृत्य आगमनकारणं पृष्टवान् । 'एतादृशं महाधनिकं मम अपेक्षां कथं वदेयम् ?' इति चिन्तयन् रामनाथः मौनम् आश्रितवान् ।

तदा गुणशीलः एव - ''आगमनकारणं निस्सङ्कोचं वदतु भवान्'' इति द्वित्रवारम् अनुरोधपूर्वकम् उक्तवान् । अन्ते रामनाथः सङ्कोचम् अनुभवन् एव स्वस्य अपेक्षाम् उक्तवान् । गुणशीलः रामनाथस्य प्रार्थनां सहर्षम् अङ्गीकुर्वन् - ''अद्य रात्रौ भवान् अत्रैव विश्रान्तिसुखम् अनुभवतु । श्वः प्रातः गच्छाम । तदभ्यन्तरे अहं सर्वसन्नाहं करिष्यामि'' इति उक्तवान् ।

एतत् श्रुत्वा रामनाथः नितरां सन्तुष्टः । गुणशीलस्य आतिथ्यस्य कारणतः सः रात्रौ सम्यक् निद्रां प्राप्तवान् अपि ।

अनन्तरदिने प्रातः गुणशीलस्य सेवकाः रामनाथम् उत्थाप्य स्नानं कारितवन्तः । तत्समये रामनाथः गुणशीलस्य स्वभावादिविषये तान् पृष्टवान् । तैः यत् उक्तं तत् रामनाथे आश्चर्यम् अजनयत् । गुणशीलः सेवकेभ्यः उत्तमवेतनं ददाति स्म । किन्तु कदाचित् विचित्रव्यवहारेण तान् खेदयति स्म । क्वचित् हसन्मुखतया वार्तालापं कृतवान् सः पुनः क्वचित् विना कारणं तर्जयति स्म अपि ।

''एवं तर्हि गुणशीलः सज्जनः उत दुर्जनः ?'' इति तान् पृष्टवान् रामनाथः ।

''तस्मिन् सद्गुणाः यथा तथा, दुर्गुणाः अपि सन्ति । किन्तु सः स्वदोषान् गोपयितुं प्रयत्नं न करोति इति तु तस्य वैशिष्ट्यम्'' इति उक्तवन्तः ते सेवकाः ।

एतत् श्रुत्वा रामनाथः आत्मनि उत्पन्नम्



SK-F4



आतङ्कं निरोद्धुम् अशक्नुवन् - ''न जाने, सः संन्यासी एतस्य सत्कारं कृत्वा एतस्य द्वारा उपवासः कारणीयः इति किमर्थम् उक्तवान् इति । एतस्य व्रताचरणात् मम प्रयोजनम् अस्ति वा न वा इत्यपि न ज्ञायते'' इति उक्तवान् ।

तदा सेवकाः - ''एतस्य उपवास-व्रताचरणवार्ता अस्माभिः अपि श्रुता एव । उपवासव्रताचरणार्थं भवता एषः कथं चितः इति वयं सर्वे आश्चर्यम् अनुभूतवन्तः । यतः अन्ये प्रतिदिनं त्रिवारम् आहारं सेवन्ते चेत् एषः तु दिने षड्वारं षड्रसोपोतं भोजनं करोति । एतादृशः अस्माकं स्वामी उपवासव्रतम् आचरितुं किं शक्नुयात् इत्येव आश्चर्यम् अस्माकम्'' इति उक्तवन्तः ।

एतत् श्रुत्वा रामनाथस्य आतङ्कः इतोऽपि प्रवृद्धः । तथापि सः संन्यासिनः वचने विश्वासं स्थापयन् मौनम् आश्रितवान् ।

ततः अल्पे एव काले प्रयणार्थं शकटः सिद्धः । शकटे बहवः बन्धाः आसन् । रामनाथ-गुणशीलाभ्यां सह कश्चन पाचकः अपि शकटे उपविष्टः आसीत् । गुणशीलः पाचकं प्रदर्शयन् - ''अहं भोजनप्रियः । एषः यं पाकं करोति सः एव मह्यं विशेषतः रोचते । अतः एव अहं यत्र यत्र गच्छामि तत्र सर्वत्र मया सह एषः अपि भवति एव'' इति रामनाथम् उक्तवान् ।

ततः प्रयाणम् आरब्धम् । मध्येप्रयाणं पाचकेन दत्तः उपाहारः रामनाथ-गुणशीलाभ्यां खादितः । रामनाथः यावत् खादितवान् ततोऽपि द्विगुणितं खादितवान् गुणशीलः । पुनः अल्पे एव काले फलाहारः सज्जीकृतः पाचकेन । रामनाथः एकं फलम् अपि खादितुं न शक्तवान् चेत् गुणशीलः तु विविधानि बहूनि फलानि आतृप्ति खादितवान् ।

किञ्चिद्दूरं यदा गतं तदा तेन मार्गेण गच्छन् कश्चन पुरुषः गुणशीलेन दृष्टः । सः शकटं स्थगयित्वा तेन पुरुषेण सह वार्तालापं कृतवान् ।

''मम पत्नी अस्वस्था अस्ति । चिकित्सार्थं वैद्येन सूचितानि मूल-सस्यादीनि आनेतुं पार्श्वग्रामं गच्छन् अस्मि'' इति उक्तवान् सः पुरुषः ।

गुणशीलः तस्य गृहस्य परिस्थितिं ज्ञात्वा अनुकम्पवचनानि उक्तवान् । तदा सः प्रयाणिकः प्रार्थितवान् - ''श्रीमन् ! मम पत्न्याः तीव्रम् अस्वास्थ्यम् अस्ति ।

याव‌च्छीघ्रम् औषधमूलानि अहं यदि गृहं नयेयं तर्हि मम पत्नी शीघ्रं स्वस्था भवेत् । अतः भवान् यदि शकटेन पार्श्वग्रामपर्यन्तं माम् अपि नयेत् तर्हि अहम् उपकृतः भवेयम्'' इति ।

''तस्याः प्राणापायः तु नास्ति किल ? अस्वास्थ्यं तु जीवने सहजम् । प्राप्तम् अनुभोक्तव्यम् एव । पञ्चवर्षेभ्यः पूर्वं नवनीतं चोरितवान् स्यात् इति शङ्कया भवतः पत्नी मम पुत्रं सम्यक् ताडितवती आसीत् । तस्य फलम् अनुभवन्ती अस्ति सा । अनुभवतु नाम'' इति तम् उक्त्वा तस्मै शकटे स्थलम् अदत्त्वा शकटचालकम् उक्तवान् ''शकटम् अग्रे नयतु'' इति ।

गुणशीलस्य व्यवहारं दृष्ट्वा रामनाथः आश्चर्यचकितः । पुनः किञ्चिद्दूरं यदा गतं तदा मार्गस्य पार्श्वे रुदन् उपविष्टः कश्चन दृष्टः । गुणशीलः शकटं स्थगयित्वा शकटात् अवतीर्य तं पश्यन् - ''भवान् नरसिंहः खलु ? किमर्थं रुदन् उपविष्टवान् भवान् ?'' इति पृष्टवान् ।

नरसिंहः रुदन् एव - ''मम पिता देवराजः चतुर्भ्यः दिनेभ्यः पूर्वं दिवङ्गतः । इदानीं पितृवियोगं सोढुम् अशक्नुवन् किङ्कर्तव्यताविमूढः सन् अत्र उपविष्टः अस्मि'' इति उक्तवान् ।

''किं देवराजः दिवङ्गतः ? हा हन्त ! सर्वं दैवाधीनम् । यदा अहं बालः आसं तदा सः वाटिकास्थम् आम्रफलम् आनीय मह्यं ददाति स्म'' इति वदन् गुणशीलः अपि अश्रूणि स्रावितवान् ।

तदा नरसिंहः एव आत्मानं निगृह्य



गुणशीलं सान्त्वनवचनानि उक्तवान् । किन्तु अत्रान्तरे गुणशीलः उच्चैः हसन् - ''भवतः पिता दुष्टः आसीत् । यावज्जीवं सः वञ्चनाम् एव करोति स्म । कर्मकरान् वञ्चनया पीडयति स्म । मदीयाम् अल्पां भूमिं वञ्चनया स्वायत्तीकृतवान् आसीत् सः । अतः सः दुष्टः मृतः यत् तत् मम सन्तोषाय एव'' इति उक्त्वा शकटम् आरुह्य ततः प्रस्थितवान् ।

'नरसिंहस्य पिता वञ्चकः एव स्यात् नाम । तथापि एवं निष्ठुरतया कथनं तु न उचितम्' इति रामनाथः अचिन्तयत् । प्रयाणम् अग्रे अनुवृत्तम् । मध्याह्नसमये गुणशीलः शकटं स्थगयित्वा सम्यक् भोजनं कृतवान् । रामनाथः किञ्चिदेव भोजनं कर्तुं शक्तवान् ।



''अत्रैव किञ्चित् विश्रान्तिं अनुभावाम । पुनः भोजनं समाप्य एव प्रयाणम् अनुवर्तयाम'' इति उक्तवान् गुणशीलः ।

''हा हन्त ! कीदृशी बुभुक्षा एतस्य !'' इति स्वगतम् उक्तवान् रामनाथः । विश्रान्तेः अनन्तरं गुणशीलस्य भोजनं प्रवृत्तम् । ततः प्रस्थितौ तौ सायङ्कालसमये रामनाथस्य गृहं प्राप्तवन्तौ ।

रामनाथगृहे गुणशीलस्य व्यवहारः विचित्रः आसीत् । आदौ सः रामनाथ-पत्न्याः सौन्दर्यं सद्गृहिणीत्वं च प्रशंसितवान् । पुनः अल्पे एव काले - ''एषा गृहस्य शुचिताविषये सर्वथा अनवधानवती'' इति निन्दितवान् । रामनाथस्य पुत्रान् दृष्ट्वा - ''सुन्दराः बालाः एते'' इति प्रशंसितवान् सः क्षण-कालानन्तरं - ''सर्वथा दुश्चेष्टापराः बालाः एते'' इति निन्दितवान् ।

''रामनाथ ! भवतः निधिनिमित्तम् अहं सहायकः अभवं यत् तत् तु महते सन्तोषाय'' इति उक्तवान् गुणशीलः किञ्चित्कालानन्तरं - ''भवतः निमित्तं मया सकलवैभोगं परित्यज्य आगत्य कष्टम् अनुभोक्तव्यम् अभवत् अत्र'' इति कोपेन उक्तवान् । एवम् एव प्रथमं दिनम् अतीतम् । पुनः दिनद्वयं यावत् रामनाथगृहे सन्तोषेण एव तिष्ठन् आतृप्ति भोजनं कृतवान् गुणशीलः ।

तृतीयदिने रात्रौ गुणशीलः रामनाथस्य-पत्नीम् उक्तवान् - ''श्वः मम जलसेवनम् अपि नास्ति । तादृशः कठिनोपवासः । पाककरणक्लेशः नास्ति भवत्याः'' इति ।

चतुर्थे दिने उपवासः । किन्तु गुणशीलः पाचकद्वारा भक्ष्याणि कारयित्वा त्रिवारं भोजनं कृतवान् ।

''उपवासदिने एवं भोजनं करोति खलु भवान् !'' इति यदा रामनाथः उक्तवान् तदा गुणशीलः - ''षड्वारं भोजनकरणं मम नित्यप्रवृत्तिः । अद्य तु मया त्रिवारम् एव भोजनं कृतम् । मम एतत् कृत्यं निर्जलोपवासायते एव'' इति उक्तवान् । ''यः निधिः प्राप्यते तत्र पादभागः मह्यं दातव्यः भवता'' इत्यपि उक्तवान् सः ।

एतत्सर्वं दृष्टवतः रामनाथस्य आतङ्कः प्रवृद्धः । अनन्तरदिने यदा गुणशीलः खनित्रेण खननं कृतवान् तदा 'ठण्' इति शब्दः श्रुतः । पुनः किञ्चित् खननं यदा कृतं तदा सुवर्णनाणकैः पूर्णः कलशः प्राप्तः ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! गुणशीलः निर्जलोपवासं न कृतवान् चेदपि रामनाथः निधिं कथं प्राप्तवान् ? गणशीले उत्तमपुरुषलक्षणानि तु न दृश्यन्ते । मरणावस्थाम् आपन्नायाः पत्न्याः विषये अनुकम्पायां प्रदर्शनीयायां कोपं प्रदर्शितवान् सः । मृतपितृकस्य नरसिंहस्य पुरतः निष्ठुरवचनानि उक्तवान् । 'यः निधिः प्राप्यते तत्र चतुर्थांशः दातव्यः' इति वदन् प्रतिफलापेक्षाम् अपि प्रकटितवान् । एतस्य सर्वस्य परिशीलनात् ज्ञायते खलु - निधिप्राप्तिः काकतालीय-न्यायेन अभवत्, न तु व्रतादीनां प्रभावतः इति ? किं गुणशीले सद्गुणाः सन्ति इति वयं वक्तुं शक्नुयाम ? किं संन्यासिनः वचनं मिथ्या आसीत् ? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''जगति केवलसद्गुणवान् कोऽपि न भवति । यः उत्तमः भवति सः यदि स्वस्य दुर्गुणान् गोपयति तर्हि तस्य प्रगतिः कुण्ठिता भवति । गुणशीलः तु सद्गुणान् दुर्गुणेभ्यः पृथक्कृतवान् आसीत् । अतः एव तस्य सद्गुणाः दुर्गुणाः चापि सर्वैः ज्ञायन्ते स्म । तस्मिन् द्विविधं व्यक्तित्वम् आसीत् । अतः एव सः दिने षड्वारं भोजनं करोति स्म । सज्जनत्व-कारणतः सः अन्येषाम् उपकारं करोति स्म । दुर्जनत्वकारणतः अन्यान् द्विषन् स्वार्थगुणं प्रदर्शयति स्म । सज्जनत्व-कारणतः सः रामनाथस्य साहाय्यं कर्तुम् इष्टवान् । रामनाथस्य पत्न्या कृतं भोजनं कृतवान् च । दुर्गुणत्वकारणतः सः पाचक-द्वारा पाकं कारयित्वा भोजनं कृतवान् । उपवासदिने दुर्जनव्यक्तित्वेन भोजनं कृतम् आसीत् । किन्तु सज्जनव्यक्तित्वेन निर्जलोपवासः एव कृतः आसीत् । सः तस्मिन् त्रिवारम् एव भोजनं कृतवान् , न तु षड्वारम् इत्येतत् एव अत्र प्रमाणम् । एतस्मात् एव निधिः प्राप्तः । निधिप्राप्तिः काकतालीया तु सर्वथा न'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।



# साष्टाङ्गनमस्कारः

श्रीपुरं समुद्रतीरस्थः कश्चन ग्रामः । कदाचित् स च ग्रामः चण्डमारुतकारणतः विशेषहानिम् अन्वभवत् । बहूनि गृहाणि उध्वस्तानि अभवन् । साम्बशिवस्य अपि गृहं विनष्टम् अभवत् । स्वगृहस्य समीकरणार्थं प्रतिवेशिनः प्रार्थितवान् साम्बशिवः । तदा ते सूचितवन्तः - 'कुसीदवणिक् गोविन्दः प्रार्थितः चेत् ऋणं प्राप्येत' इति । तदनुगुणं साम्बशिवः गोविन्दस्य समीपं गत्वा स्वकष्टं निवेद्य - ''सहस्रं रूप्यकाणि ऋणरूपेण ददातु'' इति तं प्रार्थितवान् ।

तदा गोविन्दः तम् आपादमस्तकं दृष्ट्वा - ''भवान् एव खलु साम्बशिवनामकः ? मां जानाति अपि भवान् !'' इति उपहासपूर्वकम् उक्तवान् ।

''भवन्तं को वा न जानाति श्रीमन्, एतस्मिन् ग्रामे !'' इति उक्तवान् साम्बशिवः ।

''मया चिन्तितम् आसीत् - 'भवान् न जानीयात् यत् अहं कः इति' इति । यतः इतः पूर्वं मां दृष्ट्वा अपि कदापि भवान् मां न नमस्कृतवान् आसीत् । महत् धार्ष्ट्यं भवतः'' इति कोपेन उक्तवान् गोविन्दः ।

''अज्ञानवशात् कृतः दोषः क्षन्तव्यः'' इति वदन् गोविन्दं नमस्कृतवान् साम्बशिवः ।

''चण्डमारुतकारणतः खलु एषः नमस्कारः ! एतादृशः नमस्कारः ग्रामस्थैः सर्वैः अपि क्रियते । भवतः तु महान् अहङ्कारः । अतः भवता साष्टाङ्गनमस्कारः एव करणीयः'' इति उक्तवान् गोविन्दः ।

साष्टाङ्गं नमस्कृत्य गोविन्दतः धनं प्राप्य ततः प्रस्थितवान् साम्बशिवः । दूरात् एव एतत्सर्वं दृष्टवान् वीरभद्रः गोविन्दसमीपम् आगत्य उक्तवान् - ''अल्पस्य धनस्य निमित्तं गोविन्दाय साष्टाङ्गनमस्कारः समर्पितः खलु भवता ! अहो लज्जावहम् एतत्'' इति ।

तदा साम्बशिवः शान्तस्वरेण उक्तवान् - ''किं तेन ? मत्तः एतस्य ऋणस्य प्रतिप्राप्त्यर्थं गोविन्देन चत्वारः साष्टाङ्गनमस्काराः मह्यम् अर्पणीयाः भविष्यन्ति'' इति ।



# समुद्रतीरप्रयाणम् - १३

# भारतीयाः प्रवालद्वीपाः

रचना - मीरा नायर् ◆ चित्रम् - गौतमसेनः




केरलराज्यस्य कोच्चिन्नगरात् ४०० कि.मी. दूरे 'लक्षद्वीप'नामकाः द्वीपसमूहाः सन्ति। अस्माकं देशे प्रवालद्वीपाः अत्रैव सन्ति, न अन्यत्र ।

'लक्षद्वीपः' ३६ द्वीपानां समूहः । १९५३तमे वर्षे एषः द्वीपसमूहः केन्द्रशासितप्रदेशत्वेन परिगणितः अभवत् । १९७४तमे वर्षे एतस्य द्वीपसमूहस्य नाम 'लक्षद्वीपः' इति निश्चितम् । ततः पूर्वं लक्कद्वीपः, अमिनीद्वीपः, मिनिकाय्द्वीपः इत्यादिभिः नामभिः निर्दिश्यते स्म एषः द्वीपसमूहः ।

आहत्य अत्र ३६द्वीपाः सन्ति । किन्तु दशसु द्वीपेषु जनाः वसन्ति । अमनी, अण्ड्राट्, अगाट्टि, बिट्रि, चेल्लाट्, कड्मट् कल्वेनि, कावरट्टि, किल्टान् इत्यादीनि अत्रत्यद्वीपानां नामानि ।

एतेषु द्वीपेषु केरलीयाः एव ऐदम्प्राथम्येन वासम् आरब्धवन्तः । केरलीयः अन्तिमः राजा चेरमान्पेरुमाळः यदा इस्लांमतं स्वीकृत्य मक्कां गतवान् तदा कन्नूरुराजः तस्य प्रत्यानयनार्थं कांश्चन सैनिकान् प्रेषितवान् । तेषां सैनिकानां नौका मध्येमार्गं शिलया घट्टिता अभवत् । अग्रे गमनं दुष्करं जातम् । प्रत्यागमनम् अपरिहार्यं जातम् ।

प्रत्यागमनसमये ते सैनिकाः एतान् द्वीपान् दृष्टवन्तः, कन्नूरुराजं निवेदितवन्तः च । 'ये तेषु द्वीपेषु वासं कर्तुं कृषिं कर्तुं च इच्छन्ति ते अपेक्षानुसारं तत्रत्यां भूमिं स्वाधीनीकर्तुम् अर्हन्ति' इति राजा उद्घोषितवान् । ततः तत्र जनानां वासः आरब्धः ।

केरलराज्यात् गताः जनाः आदौ अमनीद्वीपं प्राप्तवन्तः । स च द्वीपः ३ कि.मी. दीर्घः, १६ कि.मी. विस्तृतः च अस्ति । एतद्द्वीपवासिनः कूर्म-शल्केन शुष्क-नारिकेलावरणेन च रमणीयानाम् आधारदण्डानां निर्माणे निपुणाः । शिलानाम् उपरि प्रवालादीनाम् उपयोगेन रमणीय-चित्राणां लेखने अपि अत्रत्याः शिल्पिनः सुनिपुणाः । लक्षद्वीपस्य पश्चिमाग्रे अगाट्टिद्वीपः



अण्ड्राट्नाविकः



*कारवटिस्थम् उज्रा-प्रार्थनामन्दिरम्*

अस्ति । अत्र उष्णता अधिका ।

१९८८तमे वर्षे एतं द्वीपं प्रति विमानस्य गमनागमनम् आरब्धम् । अतः वायुयानपटे अपि एतस्य द्वीपस्य प्राशस्त्यं कल्पितम् अभवत् ।

अमनीद्वीपतः आग्नेयदिशि स्थितस्य अण्ड्राट्-द्वीपस्य जनेषु इस्लांमतानुयायिनः अधिकाः । अत्रत्या जनसङ्ख्या ५१६८० एतेषु इस्लां-मतानुयायिनः ९४% सन्ति ।

एवं हि श्रूयते - धर्मगुरुः महम्मदः इस्लांमतं दूरतीरप्रदेशान् प्रापयन्तु इति सूचितवान् । तदनुगुणं हजरतः नौकया प्रस्थितवान् । किन्तु चण्डमारुतकारणतः तदीया नौका भग्ना । ततः सः काष्ठफलकानां साहाय्येन अमनीद्वीपं प्राप्तवान् । तत्रत्याः जनाः इस्लांमतं यथा स्वीकुर्युः तथा करणे सः सफलः न जातः । अतः सः समीपस्थेषु अण्ड्राट्-कारवटि-कल्पेनि-द्वीपेषु मतप्रचारकार्यं कृत्वा यशस्वितां प्राप्तवान् । अण्ड्राट्द्वीपे एव तस्य मरणं जातम् । जुम्मा-प्रार्थनामन्दिरे तस्य स्मारकं निर्मितम् अभवत् ।

लक्षद्वीपसमूहे विशालतमः द्वीपः अण्ड्राट् । एषः द्वीपः नारिकेलवृक्षैः शोभते । श्रेष्ठस्तरीयानि शुष्कनारिकेलानि अन्येभ्यः प्रदेशेभ्यः इतः एव प्रेष्यन्ते ।

लक्षद्वीपस्य राजधानी कारवटि । एषा अमनी-अण्ड्राट्द्वीपयोः मध्ये अस्ति । एतस्य दैर्घ्यं ६ कि.मी. विस्तारः १ कि.मी. । एषः द्वीपः अभिवृद्धियुक्तः अस्ति । शासकीयभवनानि अधिकारिणां वासगृहाणि च अत्रैव सन्ति ।



*अल्पभारयुक्तैः त्वग्भिः कुशलतया निर्मितम् उज्राप्रार्थनामन्दिरस्य आवरणम्*

कारवटिद्वीपस्य शिल्पिनः कार्यनिपुणाः। उज्रापार्थनामन्दिरं तेषां नैपुण्यस्य दर्पणायते। लक्षद्वीपे स्थितेषु ५२ यवनप्रार्थनामन्दिरेषु एतत् एव अत्याकर्षकम् अस्ति। एतत् १६७०तमे वर्षे निर्मितम् अभवत्।

एतस्य भवनस्य आवरणम् अल्पभारयुक्तैः त्वक्खण्डैः निर्मितम् अस्ति। हरित-रक्तवर्णोपेतम् अपि अस्ति तत्। अत्रत्यानां कूपानां जलं रोगनिवारकम् अस्ति इति जनाः विश्वसन्ति।

कारवटितः दक्षिणदिशि कल्पेनिद्वीपः अस्ति। अरबलेखकाः एतं द्वीपं 'कोल्पैनि'नाम्ना निर्दिशन्ति स्म। अरेबियागमनमार्गे अस्ति एषः द्वीपः। एतं द्वीपं प्राप्तुं ५० कि.मी. यावत् तरणं करणीयं भवति। अतः एतं द्वीपं प्रति गमनं साहसकार्यम् एव भवति। एतस्मिन् द्वीपे तृणगुल्माः अपि न वर्धन्ते। सहस्राधिकाः समुद्रपक्षिणः अत्र वसन्ति। एतेषु रिव-टर्न्स् - प्रभृतिनामभिः निर्दिश्यमानाः पक्षिणः आधिक्येन दृश्यन्ते। तीरात् सुदूरात् एव पक्षिणां कलरवः श्रूयते।

अत्र अपूर्वाः केचन पक्षिणः सन्तानवर्धनं कुर्वन्ति। सिकतासु शिलाकोटरे वा ते रमणीयं नीडं निर्मान्ति। अत्र प्राचुर्येण प्राप्यमाणाभिः शुक्तिभिः नीडम् अलङ्कुर्वन्ति एते। एतेषाम् अण्डानि कुक्कुटाण्डानि एव अनुकुर्वन्ति आकारेण। किन्तु तानि रक्त-पाटल-कालकैः युक्तानि भवन्ति। अमनी-अण्ड्राट्द्वीपवासिनः एतेषाम् अण्डानां खादने विशेषरुचिं वहन्ति। एषु दिनेषु सर्वकारेण पिट्टीद्वीपः पक्षिधामत्वेन घोषितः अस्ति। अतः अण्डानां ग्रहणार्थम् एतं द्वीपं प्रति जनानां गमनं न्यूनं जातम् अस्ति।

'रीप'पक्षिणः 'टूना'पक्षिणः च धीवराणाम् उपकारं कुर्वन्ति। 'लघुमीनानां ग्रहणे आसक्ताः एते यत्र भवन्ति तत्र मीनाः आधिक्येन भवन्ति एव' इति निर्णयन्ति धीवराः।

लक्षद्वीपस्य दक्षिणाग्रे मिनिकाय्द्वीपः अस्ति। अत्रत्यं प्रवालसरोवरं नौकाप्रवेशार्थम् अपेक्षितां गभीरतां विशालतां च वहति।

मिनिकाय्द्वीपवासिनः सर्वे पुरुषाः मीनग्रहणनिरताः भवन्ति प्रायः। अतः दिने एतस्मिन् द्वीपे स्त्रियः एव आधिक्येन भवन्ति। अतः एव १३ शतके एतं द्वीपं गतः मार्कोपोलोनामकः यात्रिकः एतं द्वीपं 'स्त्रीद्वीपः' इति निर्दिष्टवान्। एतन्नाम इदानीम् अपि अस्ति एतस्य।

अत्रत्याः पुरुषाः मीनग्रहणार्थं नौकया प्रयाणं कुर्वन्तः भवन्ति इत्यतः द्वीपस्य सर्वेषु कार्यालयव्यवहारेषु श्रमप्रधानकार्येषु च स्त्रियः एव आधिक्येन दृश्यन्ते।



पिट्टीद्वीपवासिनः नाडी-टर्न्स्-रीव-पक्षिणः

मिनिकायद्वीपवासिनां वेषभूषादिकम् अन्येषां वेषभूषादिभ्यः भिन्नं भवति । पुरुषाः 'जीन्स्'-ऊरुकं 'टी'-युतकं च धरन्ति । स्त्रियः दीर्घां रक्तवर्णीयवेष्टीं धरन्ति । कण्ठं परितः एताः रमणीयान् हारान् धरन्ति । श्वेतवस्त्रेण कृष्णवस्त्रेण वा शिरः आवेष्टयन्ति च । अल्पवयस्काः अपि बालिकाः वस्त्रेण शिरोवेष्टनं कुर्वन्ति एव ।



लक्षद्वीपस्य स्त्रियः

अन्यद्वीपवासिनः जनाः श्वेतवेष्टीं धरन्ति । स्त्रियः च विशेषाकृतियुक्तं चोलं 'गोसी'नामकम् अधोवस्त्रं च धरन्ति ।

मिनिकाय्जनानां भाषा 'मही' । अन्यद्वीपेषु मलयाळभाषा प्राचुर्येण उपयुज्यते । मिनिकाय्-द्वीपवासिनः भावयन्ति यत् अस्मत्पूर्वजाः गुजरात्प्रदेशतः आगताः आसन् इति । एते 'टक्कुस्'पदेन निर्दिश्यन्ते । एतत् पदं 'ठाकुर'-पदस्य अपभ्रंशः स्यात् इति ऊह्यते । गुजरातप्रदेशे इव अत्रापि प्रतिगृहम् आन्दोलिका भवति ।

अत्रत्यानां साम्प्रदायिकनृत्यस्य नाम 'दण्डि' इति । एतत् गुजरातप्रदेशस्य 'दण्डियारास्' सम्बन्धि अस्ति । लक्षद्वीपस्य अन्यद्वीपेषु इव मिनिकाय्-द्वीपे अपि मातृस्वाम्यव्यवस्था व्यवहारे अस्ति । एतस्य तात्पर्यम् एतत् सिद्ध्यति यत् अस्मद्देशस्य विविधराज्यीयमहिलानां यत् स्थानमानादिकम् अस्ति ततोऽपि उन्नतं स्थानमानादिकम् अस्ति अत्रत्यानाम् इति ।



*मिनिकायद्वीपे 'लावा'नामके नृत्ये निरताः मूलवासिनः*




# नित्यानन्दः

विजयनगरे चार्वाकनामकः युवकः आसीत् । सः अत्यन्तं श्रद्धया कार्यं करोति स्म । सः नूतनविषयान् ज्ञातुम् अत्युत्सुकः आसीत् । अन्येषां वचनानि कदापि तस्मिन् कोपं न जनयन्ति स्म । सर्वदा सः हसन् एव भवति स्म इति कारणतः तं जनाः ''नित्यानन्दः'' इत्येव आह्वयन्ति स्म ।

रोगात् सद्योविमुक्तः प्रारब्धनामकः कश्चन धनिकः विश्रान्तिनिमित्तं तत् नगरं आगतवान् । सः तस्मिन् नगरे बृहत् गृहं भाटकार्थं स्वीकृतवान् । स्वकार्यनिमित्तं सः सेवकनियोजनं कृतवान् । तस्य गृहं प्रतिदिनं नगरस्य प्रमुखव्यक्तयः आगच्छन्ति स्म ।

प्रारब्धः सर्वदा आतङ्कम् अनुभवति स्म । तत् दृष्ट्वा कश्चित् तम् एवं सूचितवान् - ''एतस्मिन् नगरे चार्वाक-नामकः कश्चन नित्यानन्दः अस्ति । तं भवान् सेवकरूपेण स्वीकरोति चेत् सन्तोषेण स्थातुं शक्नोति'' इति ।

तां सूचनाम् अङ्गीकृत्य प्रारब्धः स्वस्य सेवार्थं चार्वाकं नियोजितवान् । चार्वाकः प्रारब्धस्य सेवां बहु सम्यक् करोति स्म । प्रारब्धस्य प्रकोष्ठः सर्वदा शुभ्रतया रक्षितः भवति स्म । तत्र आगताः सर्वेऽपि चार्वाकस्य कार्यस्य श्लाघनं कुर्वन्ति स्म । परन्तु एतेन प्रारब्धस्य आतङ्कः किञ्चिदपि न्यूनः न अभवत् । अतः सः एकदा चार्वाकं पृष्टवान् - ''अत्यन्तं धनिकः सन् अहं आतङ्केन जीवनं कुर्वन् अस्मि । सर्वदा कार्यमग्नः सन् भवान् नित्यानन्दः अस्ति । भवतः आनन्दस्य रहस्यं किम् ?'' इति ।

तदा चार्वाकः उक्तवान् - ''एतस्मिन् प्रपञ्चे आनन्दात् श्रेष्ठतरम् अन्यत् किमपि नास्ति इति भाति मम । भवतः आतङ्कस्य कारणमेव मया न ज्ञायते'' इति ।



''स्वजनाः एव यदि मम सेवां कुर्वन्ति तर्हि सा तृप्तिः अन्या एव भविष्यति खलु ?'' इति प्रारब्धः उक्तवान् ।

''भवान् प्रतिदिनं मम कृते दश रूप्यकाणि ददाति । तत्कारणतः भवतः गृहजनाः प्रतिदिनं सहस्राधिकरूप्यकाणि सम्पादयन्ति । एवं सेवाकार्ये मम नियोजनं भवतः लाभाय एव अभवत् खलु ?'' इति उक्तवान् चार्वाकः ।

''मम दशरूप्यकाणां सेवकः न आवश्यकः, अपि तु सहस्ररूप्यकाणां सेवकः एव आवश्यकः । एषा न्यूनता एव मम आतङ्कस्य कारणम्'' इति उक्तवान् प्रारब्धः ।

तदा उच्चैः हसन् चार्वाकः उक्तवान् - ''एतस्मिन् जगति सेवावृत्तिः अत्यन्तं हीनवृत्तिः । अन्यकार्याणि कर्तुम् अनर्हाः एव सेवकाः भवन्ति । धनार्थं सेवां कुर्वन्ति च । यस्य समीपे धनम् अधिकं भवति तस्य मनः सेवायां न प्रवर्तते । अन्येषां सेवा प्राप्तव्या इत्येव भावना भवति तस्य । अतः भवादृशानां सेवां कर्तुम् अस्मादृशाः एव अर्हाः, न तु भवतः गृहजनाः'' इति ।

तदा प्रारब्धः पृष्टवान् - ''भवान् सेवा-कार्यं हीनवृत्तिः इति वदन् ताम् एव कुर्वन् अपि अत्यन्तं सन्तुष्टः अस्ति । निर्भयेन कार्यं करोति च । एतत् कथम् ?'' इति ।

''एतस्मिन् जगति मादृशानां सेवकानां सङ्ख्या एव अधिका अस्ति । एषः विषयः मम सन्तोषाय भवति'' इति उक्तवान् चार्वाकः ।

''महाकाव्यं महाभारतं च अहं न

तत् श्रुत्वा प्रारब्धः उक्तवान् - ''बाल्ये अहम् एवं न आसम् । केवलैः शतरूप्यकैः अहं वाणिज्यस्य आरम्भं कृतवान् । अहम् अद्य कोट्यधीश्वरः अस्मि । महता रोगेण पीडितः अहं वैद्येन सूचितः अस्मि यत् वासस्थलपरिवर्तनं करणीयम् इति । मम बान्धवाः 'सर्वाणि कार्याणि वयमेव पश्यामः । भवान् परस्थले विश्रान्तिं स्वीकरोतु' इति उक्त्वा माम् अत्र प्रेषितवन्तः । यद्यपि सर्वे बान्धवाः मम सन्ति, तथापि मया सह कोऽपि नास्ति इत्येतत् एव मम दुःखस्य कारणम्'' इति ।

तदा चार्वाकः उक्तवान् - ''एषः तु सन्तोषस्य एव विषयः । भवतः बान्धवाः भवन्तं बहु प्रीत्या पश्यन्ति । एवं स्थिते किं खेदेन ?'' इति ।

पठितवान् इत्यपि आतङ्कः मम'' इति यदा प्रारब्धः उक्तवान् तदा - ''काव्यपठनम् अलसानां कार्यम् । अतः सर्वदा कार्य-करणमेव वरम्'' इति उक्तवान् चार्वाकः ।

''अहं महता रोगेण पीडितः अस्मि इत्यपि आतङ्कः मम'' इति पुनः यदा प्रारब्धः उक्तवान् तदा - ''इदानीं रोगमुक्तः भवान् विश्रान्तिसुखम् अनुभवन् अस्ति खलु'' इति उक्तवान् चार्वाकः ।

एवं प्रारब्धस्य सर्वासाम् अपि समस्यानां सिद्धपरिहारः आसीत् एव चार्वाकस्य । एतत् दृष्टवतः प्रारब्धस्य मनसि असूया उत्पन्ना । स्वस्य आतङ्कं विस्मर्तुं प्रयत्नम् आरब्धवान् । सः इदानीं चार्वाके असूयावान् अभवत् । चार्वाकस्य हसन्मुखतां दृष्टवतः एतस्य आतङ्कः द्विगुणीकृतः अभवत् । एतं विषयं सः गण्यव्यक्तीनां पुरतः उक्तवान् ।



एतत् श्रुत्वा एकः उक्तवान् - ''एवं तर्हि सन्तोषं प्राप्तुं सुलभः मार्गः प्राप्तः भवता । भवान् प्रतिदिनं चार्वाकं सम्यक् तर्जयति चेत् तस्य हसन्मुखता अपगमिष्यति । तदा भवतः आतङ्कः अपि गमिष्यति'' इति ।

तदारभ्य प्रारब्धः विना कारणं चार्वाकं निन्दितुम् उद्युक्तः अभवत् । तथापि चार्वाकः हसन्मुखी सन् एव कार्यं करोति स्म । तदा प्रारब्धः उक्तवान् - ''ताडनात् अपि भवतः लज्जा न भवति । भवान् शुनकसदृशः'' इति ।

तथापि चार्वाकः हसन् एव स्वकार्यं कुर्वन् आसीत् । पुनरेकवारं प्रारब्धः तं - ''भवान् वराहः'' इति, 'वृषभः'' इति, ''गार्दभेयः'' इति च निन्दितवान् । एतादृशनिन्दनं श्रुत्वा अपि हसन्मुखताम् अपरित्यजन्तं चार्वाकं दृष्ट्वा कदाचित् पृष्टवान् प्रारब्धः - ''मम निन्दनं श्रुत्वापि भवान् कथं सन्तोषेण तिष्ठति ?'' इति ।

तदा चार्वाकः उक्तवान् - ''शुनकः अत्यन्तं विश्वासयोग्यः प्राणी इति प्रसिद्धः अस्ति । वृषभ-गर्दभादयः उत्तमसेवकाः । एवं मां शुनकगर्दभादिशब्दैः निर्दिशन् भवान् मम श्लाघनमेव कृतवान् अस्ति । अतः अहं सन्तुष्टः अस्मि'' इति ।

एतस्य श्रवणेन प्रारब्धस्य कोपः अधिकः जातः । 'कथञ्चिदपि चार्वाकः असन्तुष्टः करणीयः' इति सः निर्णीतवान् ।

बहुधा चिन्तनेन तस्य मनसि कश्चन उपायः स्फुरितः । 'एतावद्दिनपर्यन्तम् अहं

चार्वाकम् एकान्ते एव निन्दितवान् । इतः परं अन्येषां पुरतः निन्दित्वा तम् असन्तुष्टं करिष्यामि' इति सः चिन्तितवान् । एकदा सायङ्काले सः चार्वाकं सर्वेषां पुरतः बहुधा निन्दितवान् । तदापि चार्वाकः हसन् एव कार्यं कुर्वन् आसीत् । एतस्मात् अत्यन्तं कुपितः प्रारब्धः पुनः तं निन्दितवान् ।

तथापि चार्वाकः तूष्णीमेव आसीत् । परन्तु तादृशनिन्दनानि श्रुत्वा खिन्नः सत्यमूर्तिः नाम तदीयस्नेहितः कोपेन - ''चार्वाक ! सः भवन्तम् एतावत् निन्दन् अस्ति । तथापि भवान् किमर्थम् अत्रैव कार्यं करोति ?'' इति पृष्टवान् ।

तदा चार्वाकः शान्तस्वरेण उक्तवान् - ''अहं धनार्थम् अत्र कार्यं करोमि'' इति ।

''धनार्थं चेत् मम गृहमेव आगत्य कार्यं करोतु । अहमेव तावत् धनं दास्यामि'' इति उक्तवान् सत्यमूर्तिः ।

तदा चार्वाकः उक्तवान् - ''मम स्वामी मम कार्यम् इच्छति । सः मां बहुधा निन्दति चेदपि कदापि 'कार्यं त्यक्त्वा गच्छतु' इति तु न उक्तवान् । अतः अन्यगृहगमनं धर्म-सम्मतं न'' इति ।

''निन्दकस्य गृहे एव कार्यं कर्तुं भवान् इच्छति वा ?'' इति पृष्टवान् सत्यमूर्तिः ।

''निन्दकस्य सेवा एव प्रपञ्चे अत्यन्तं सन्तोषदायकः विषयः'' इति उत्तरं दत्तवान् चार्वाकः ।

उत्तररूपेण सत्यमूर्तिः यावत् किमपि वक्तुम् उद्युक्तः तावता प्रारब्धः उक्तवान् - ''नित्यानन्दस्य रहस्यम् अहम् इदानीं ज्ञातवान् । सः सर्वतः अपि उत्तमविषयमेव स्वीकरोति । सः सर्वमपि स्वकर्तव्यं मत्त्वा करोति, न तु परोपकारः इति मत्त्वा । अन्यस्मात् अधिकप्रतिफलस्य निरीक्षां न करोति । अवास्तविकस्य चिन्तनेन आतङ्कयुक्तः न भवति । अतः एव सः नित्यानन्दः । सर्वेऽपि यदि एतदर्थं प्रयत्नं कुर्युः तर्हि केनचित् प्रमाणेन आनन्दं प्राप्तुं शक्नुयुः एव'' इति ।

तस्मात् दिनात् प्रारब्धस्य चिन्तने परिवर्तनं जातम् । तदारभ्य सः चार्वाके असन्तोषं जनयितुं क्रियमाणं प्रयत्नं त्यक्त्वा स्वस्य आतङ्कं निवारयितुम् एव प्रयत्नम् आरब्धवान् । ततः विशेषानन्दम् अनुभूतवान् च ।



चन्दमामायाः

# सुवर्ण-समयस्य प्रश्नावली - ७



१. एतत् बिजापुरं परिपालितवतः कस्यचित् प्रसिद्धपुरुषस्य स्मारकम् । एतत् कः निर्मितवान् ? एतस्य किं वैशिष्ट्यम् ?

२. अस्सांराज्ये कस्मिंश्चित् ग्रामे सप्टम्बर्-अक्टोबर्मासयोः अभ्यन्तरे कौमुदी-रहितायां तुषारमय्यां रात्रौ केचन पक्षिणः अल्पप्रकाशदर्शनात् अपि नीडात् बहिः आगच्छन्ति । ततः कानिचन दिनानि यावत् उन्मत्ताः इव व्यवहरन्ति च । तेषाम् एतादृशविचित्रघटनायाः आश्रय-भूतस्य ग्रामस्य नाम किम् ?





३. अत्र राक्षसगोधिकायाः पञ्च भागाः सन्ति । एतान् पृथक्तया कर्तयित्वा योजनेन गजाकृतिं प्राप्नुवन्तु ।



४. देहल्यां पुष्पदलाकारेण निर्मितम् एतत् भवनं किञ्चन प्रार्थनामन्दिरम् । पर्शियन्-धर्मगुरुणा स्थापितस्य आधुनिकमतस्य मन्दिरम् एतत् । एतत्सम्बद्धस्य मतस्य नाम किम् ?

# दन्तकूर्चेन निर्मान्तु भवन्तः सेचनचित्राणि

एकः दन्तकूर्चः, केचन वर्णाः, काचित् कल्पनाशक्तिः च यदि अस्ति तर्हि रमणीयं चित्रं निर्मातुं शक्नुवन्ति भवन्तः ।



आदौ सामान्यानि लघुचित्राणि कर्तयित्वा चित्रीयपत्रे (ड्रायिङ्ग् पेपर्) सुन्दरतया योजयन्तु । नाणकादीनां भारयुतवस्तूनां साहाय्येन तानि चित्राणि चित्रीयकागदस्य उपरि यथा दृढतया तिष्ठेयुः तथा कुर्वन्तु ।

ततः शरावे वर्णजलं निर्मान्तु । दन्तकूर्चस्य रोमाणि वर्णजलेन आर्द्रीकुर्वन्तु । ततः दन्तकूर्चम् ऊर्ध्वमुखं गृहीत्वा चित्रे दर्शितेन क्रमेण अङ्गुल्या दन्तकूर्चरोमाणि आकृष्य त्यजन्तु । तेन बिन्दुरूपेण वर्णाः चित्रीयकागदे पतन्ति । ततः कागदस्थानि वस्तूनि अपनयन्तु । तदा चित्रीयकागदे सुन्दराणि चित्राणि दृश्यन्ते ।



एतदर्थं वस्त्रीयवर्णाः फोटोट्रान्स्-परेण्ट्मषी वा उपयोक्तुम् अपि शक्याः । वर्णाः एकैकशः उपयोक्तव्याः । कागदतः यथा यथा हस्तः दूरं नीयते तथा तथा चित्रस्य शोभा वर्धते । स्थापितं वस्तु अपनीय द्वितीयादिवर्णानां पातनेन चित्रशोभाम् इतोऽपि वर्धयितुं शक्यते ।






# शुभाशयपत्रे योज्यतां वृक्षः



१. चतुरस्राकारकम् एकं वर्णमयं पत्रं स्वीकृत्य तत्र चित्रे दर्शितेन क्रमेण गतरेखां कुर्वन्तु ।



२. ततः अधोभागस्य ३/४ भागं कर्तयित्वा क्षिपन्तु । अनन्तरं मध्ये किञ्चित् कर्तयन्तु ।





३. एकस्मिन् कोणे किञ्चित् पुटीकृत्य पुरतः पृष्ठतः च पुटीकरणं कुर्वन्तु पर्यायक्रमेण ।



४. इदानीं भवतां वृक्षः सिद्धः अस्ति । तं शुभाशयपत्रस्य मध्यभागे योजयन्तु । वृक्षः प्रसृतरूपेण यथा दृश्यते तथा कर्तुं द्वित्राः पुटीकृतभागाः शुभाशयपत्रे संश्लेषणीयाः भवेयुः ।

# निवार्यतां कथायाः अस्तव्यस्तताम्

प्रसिद्धा सिन्दबाद्प्रयाणकथा अत्र चित्रैः निरूपिता अस्ति । किन्तु चित्राणि क्रमेण न सन्ति । विचिन्त्य तानि क्रमेण योजयन्तु तावत् ।



# खड्गमृगं चित्रयन्तु त्रिभिः सुलभैः सोपानैः



## सुवर्णसमयप्रश्नावल्याः (६) उत्तराणि



१. कारेल् कापेक् । सः स्वस्य 'आर्.यु.आर्.'-नामके रूपके ऐदम्प्राथम्येन 'रोबाट्'पदं प्रयुक्तवान् आसीत् ।

२. चक्रसमूहः । माग्लोव्रैल्यानं चक्ररहितम् । 'मेग्नेटिव् लेवियेषन्' इत्यस्य संक्षिप्तं रूपम् एव 'माग्लोव्'नाम । विशेषपट्टिकायाः उपरि सञ्चरन्ति एतानि अयस्कान्तशक्तेः आधारेण सञ्चरन्ति ।

३. रक्तः हरितः नीलः च । एतद्वर्णीयानां बिन्दूनां रेखानां वा विविधसंयोजनेन दूरदर्शकस्य जवनिकायां वर्णमयानि चित्राणि उत्पाद्यन्ते ।

४. बेञ्जमिन् प्रांक्लिन् । सः विविधान् प्रयोगान् कृत्वा 'तडित्संवाहकं' अन्विष्टवान् यत्, ततः बहूनां प्राणाः रक्षिताः रक्ष्यमाणाः सन्ति अपि ।

५. लीप्वर्षम् एव । यत् वर्षं ४०० सङ्ख्यया विभक्तुं शक्यं तत् अपि लिप्वर्षत्वेन परिगणनीयम् इति हि नियमः ।

६. नौकायां कियान् भारः आरोपयितुं शक्यः इत्येतम् अंशं ज्ञापयितुं नौकायाः बहिर्भागे लिख्यमाना रेखा एव 'प्लिम् सोल्'रेखा नाम । जलस्तरः यदि एतां रेखाम् अतिक्रम्य गच्छति तर्हि नौका जले निमग्ना भवति ।

७. भीकरमानवस्य नाम 'फ्राङ्केन्स्टीन्' इति यदि भवन्तः वदन्ति तर्हि तत् दोषाय । यतः तं भीकरमानवं सृष्टवतः विज्ञानिनः नाम 'फ्राङ्केन्स्टीन्' इति ।

**यन्त्रमानवगणना**

तत्र ९ अल्फायन्त्रमानवाः १८ कार्यानानि, १८ बीटायन्त्रमानवाः २७ कार्यानानि, २७ गामामानवाः ९ कार्यानानि च प्रतिदिनम् उत्पादयन्ति स्म ।




लोके यदा अर्जुनः वसन् आसीत् तदा लोमशः नाम मुनिः तत्र आगतवान् । सः त्रिलोकसञ्चारं कुर्वन् भवति स्म तदा तदा । स्वर्गलोकम् आगतः सः इन्द्रस्य अर्धासने उपविष्टवन्तम् अर्जुनं दृष्ट्वा अचिन्तयत् - 'इन्द्रस्य दर्शनम् एव सुदुर्लभम् । एवं स्थिते इन्द्रस्य आसनस्य अर्धभागस्य प्राप्तेः का कथा ? किन्तु एषः अर्जुनः तत् दुर्लभम् एव अर्धभागं प्राप्तवान् अस्ति । अहो अर्जुनस्य तपसः श्रेष्ठता !' इति ।

तस्य आश्चर्ययुक्तं मुखं दृष्ट्वा इन्द्रः तम् उक्तवान् - ''मुनिवर्य ! एषः अर्जुनः न हि सामान्यः । गतजन्मनि एषः नरः नाम महर्षिः आसीत् । नारायणनामकेन महर्षिणा सह बदरिकाश्रमे वसन् एषः दीर्घकालं यावत् कठिनं तपः आचरितवान् आसीत् । नारायणमहर्षिः पूर्वजन्मनि कपिलमहामुनिः आसीत् । तौ एव नर-नारायणौ इदानीं कृष्णार्जुनरूपेण अवतारं प्राप्तवन्तौ स्तः । पातालवासिनौ निवातक-वचतौ देवताः बहुधा पीडयतः । तौ संहरणीयौ स्तः अर्जुनेन । अतः एव एतम् अत्र आनायितवान् अस्मि । भवान् भूलोकं गत्वा काम्यकवने वसन्तं धर्मराजं दृष्ट्वा वदतु यत् अर्जुनः स्वर्गे सुखेन वसन् नाट्यसङ्गीतादीनाम् अभ्यासं कुर्वन् अस्ति इति'' इति ।

इन्द्रस्य आदेशं शिरसा वहन् महामुनिः लोमशः भूलोकं प्रति प्रस्थितवान् ।

'अर्जुनः स्वर्गे वसन् दिव्यास्त्राणि सम्पादितवान् अस्ति' इति वार्तां धृतराष्ट्रः श्रुतवान् । वार्तां श्रुतवान् सः आतङ्केन सञ्जयम् आहूय - ''सञ्जय ! श्रुतं खलु भवता अपि - अर्जुनः दिव्यास्त्राणि सम्पादितवान् अस्ति इति ? दुर्योधनस्य



अविवेकस्य कारणतः कीदृशी आपत्तिः आपतिता इति पश्यतु तावत् । धर्मराजः अर्जुनः च मिलित्वा त्रिलोकीम् अपि जेतुम् अर्हतः । मम पुत्राणाम् अन्त्यकालः सन्निहितः स्यात् इति भाति मम'' इति खेदेन उक्तवान् ।

''किं गतस्य विषये चिन्तनेन ? द्रौपदी राजसभाम् आनीता यत्, विविधप्रकारैः अपमानिता यत् तस्य फलम् एव पाण्डवानां कोपः । अवश्यम् अनुभोक्तव्यं खलु कृतस्य कर्मणः फलम्'' इति उक्तवान् सञ्जयः ।

धौम्यः धर्मराजं सूचितवान् यत् यावत् अर्जुनः न प्रत्यागमिष्यति तावत् तीर्थयात्रा करणीया भवता अपि इति । एतत् वचनं पालयन् धर्मराजः अनुजैः द्रौपद्या, ब्राह्मणगणेन च सह तीर्थयात्राम् आरब्धवान् । यावत् ते प्रस्थानसन्नाहं कृतवन्तः तावता लोमशमुनिः तत्र आगत्य – ''अहम् इन्द्रसभां सुधर्मां गतवान् आसम् । तत्र इन्द्रेण सह सिंहासने उपविष्टः अर्जुनः मया दृष्टः । इन्द्रलोके अर्जुनः सुखेन अस्ति । एतां वार्तां निवेदयितुम् एव अहम् अत्र आगतः । अर्जुनाय इन्द्रः बहूनि दिव्यास्त्राणि दत्तवान् अस्ति । इदानीं सः चित्रसेननामकात् गन्धर्वात् नाट्यसङ्गीतादिकम् अधीयानः अस्ति । इन्द्रस्य अपेक्षा अस्ति यत् भवता इदानीं तीर्थयात्रा करणीया इति । अहम् एतावता द्विवारं त्रिलोकीसञ्चारं कृतवान् अस्मि । तथापि इदानीं भवता सह आगन्तुं सिद्धः'' इति ।

धर्मराजः एतां वार्तां श्रुत्वा सन्तुष्टः । 'यदर्थम् अर्जुनः गतः अस्ति तत् कार्यम् इदानीं सिद्धम् अस्ति । इन्द्रस्य अपेक्षायाः पूरणार्थं मया तीर्थयात्रा करणीया एव' इति निश्चित्य सः आत्मना सह वसतः कांश्चन हस्तिनापुरं प्रति, पुनः कांश्चन द्रुपदनगरं प्रति च प्रेषितवान् । आयुधकवचादिसहितान् इन्द्रसेनप्रभृतीन् कांश्चन एव जनान् स्वसमीपे स्थापितवान् सः ।

पाण्डवाः तीर्थयात्रां कुर्वन्तः गोमतीतीर्थं, कन्यातीर्थं, गोतीर्थं, बहुदानदीतीरं, त्रिवेणीसङ्गमः, गयाक्षेत्रम् इत्यादीनि तीर्थक्षेत्राणि दृष्टवन्तः । एवं यात्रासमये ते अगस्त्याश्रमम् अपि गतवन्तः आसन् । तत्र ते अगस्त्यसम्बद्धाः कथाः श्रुतवन्तः ।

पूर्वं मणिमतीनामके नगरे वातापिः इल्वलः चेति सहोदरौ आस्ताम् । तौ ब्राह्मणान् सत्कारव्याजेन आह्वयतः स्म ।

वातापिः अजरूपं धरति स्म । इल्वलः तस्य मांसेन पाकं कृत्वा परिवेषयति स्म । भोजनानन्तरं सः - 'वातापे, आगम्यताम्' इति आह्वयति स्म । वातापिः ब्राह्मणानाम् उदरं भित्त्वा बहिः आगच्छति स्म । ततः मृतं तं ब्राह्मणं तौ खादतः स्म ।

अगस्त्यः विदर्भराजस्य पुत्र्याः लोपामुद्रायाः पतिः । कदाचित् सः पत्न्याः अपेक्षायाः पूरणार्थं धनम् आनेतुं गृहात् प्रस्थितवान् । त्रयः राजानः तेन दृष्टाः । किन्तु अपेक्षितप्रमाणेन धनं न प्राप्तम् । अगस्त्यः श्रुतवान् आसीत् यत् मणिमती-नगरवासिनौ वातापील्वलौ प्रभूतधनवन्तौ इति । अतः सः तयोः समीपं गतवान् ।

इल्वलः यथापूर्वं वातापिम् अजरूपेण परिवर्त्य तस्य मांसेन पाकं सज्जीकृत्य अगस्त्याय परिवेषितवान् । अगस्त्यः तृप्त्या भोजनं कृतवान् । तस्य भोजनस्य अनन्तरम् इल्वलः वातापिम् आहूतवान् - ''वातापे, आगच्छतु तावत्'' इति ।

''इतः परं वातापिः कथं दृश्येत ? स तु जीर्णः जातः'' इति उक्तवान् अगस्त्यः ।

एतस्मात् नितराम् आश्चर्यचकितः भीतः च इल्वलः अगस्त्यं शरणं गच्छन् प्रभूतं धनं दत्त्वा तं प्रेषितवान् ।

अगस्त्यम् अधिकृत्य धर्मराजेन अपरा अपि कथा श्रुता ।

कदाचित् मदोन्मत्तः विन्ध्यपर्वतः सूर्यम् अवदत् - ''अहं श्रेष्ठः अस्मि । अतः मां परितः एव भ्रमतु भवान्'' इति ।

''विधिनियमस्य अनुगुणं कार्यं क्रियते मया'' इति उक्तवान् सूर्यः ।

एतत् श्रुत्वा नितरां कुपितः विन्ध्यः सूर्यचन्द्रयोः ग्रहाणां च मार्गे विघ्नम् उत्पादयन् आत्मानं वर्धितवान् । एतेन लोके अन्धकारः प्रसृतः । तदा देवाः





अगस्त्यसमीपं गत्वा - ''भवतः शिष्यः विन्ध्यः लोकं सङ्कटग्रस्तं कृतवान् अस्ति । तं निगृह्णातु भवान्'' इति प्रार्थितवन्तः ।

अगस्त्यः लोपामुद्रया सह विन्ध्यपर्वतस्य समीपं गत्वा - ''वत्स ! कस्यचित् कार्यस्य निमित्तम् अहं दक्षिणापथं गच्छन् अस्मि । अतः मार्गं ददातु'' इति उक्तवान् ।

तदा विन्ध्यः विनयेन अगस्त्यं नमस्कृतवान् । ''मम प्रत्यागमनपर्यन्तं भवान् एवम् एव तिष्ठतु'' इति उक्त्वा अग्रे गतवान् अगस्त्यः । किन्तु सः दक्षिणापथतः न प्रत्यागतवान् एव । अतः विन्ध्यः शिरः उन्नेतुम् अवकाशं न प्राप्तवान् ।

कालकेयाः नाम राक्षसाः समुद्रतले वसन्तः रात्रौ भूलोकम् आगत्य सज्जनान् पीडयन्ति स्म । समुद्रवासिनः तान् संहर्तुम् अशक्नुवन्तः देवाः अगस्त्यं शरणं गतवन्तः । अगस्त्यः तावत् एकेन एव चुलुकेन समुद्रं पीतवान् । एतेन कालकेयाः दृष्टिगोचराः अभवन् । देवाः युद्धे तान् संहृतवन्तः । अगस्त्येन रिक्तीकृतः समुद्रः भगीरथेन यदा गङ्गा भूमिं प्रति आनीता तदा पूर्णतां गतः ।

अगस्त्यस्य एतादृशीः कथाः श्रुत्वा धन्यतां प्राप्य पाण्डवाः अनेकानि तीर्थानि पश्यन्तः कौशिकीनदीतीरं प्राप्य तत्रत्यं विश्वामित्राश्रमम् अपरतीरस्थं विभाण्डकमुनेः आश्रमं च दृष्टवन्तः । विभाण्डकाश्रमं गताः ते विभाण्डकपुत्रस्य ऋष्यशृङ्गस्य कथां श्रुतवन्तः ।

अङ्गदेशस्य महाराजः रोमपादः दशरथस्य मित्रम् । कदाचित् सः ब्राह्मणानां विषये द्रोहम् आचरितवान् । एतेन कुपिताः ब्राह्मणाः तत् राज्यं परित्यज्य गताः । तस्य परिणामतः अङ्गदेशे महान् क्षामः उत्पन्नः । एतस्य निवारणार्थं रोमपादः मन्त्रिणः सूचनायाः अनुगुणं सुन्दरीः अरण्यं सम्प्रेष्य ऋष्यशृङ्गे आकर्षणम् उत्पाद्य तं स्वदेशम् आनायितवान् । स्वस्य पुत्रीं शान्तां तस्मै दत्तवान् च । ऋष्यशृङ्गस्य आगमनात् अङ्गदेशे वृष्टिः ततः समृद्धिः च जाता ।

पाण्डवाः अनेकानि तीर्थानि सेवमानाः महेन्द्रपर्वतसमीपम् आगतवन्तः । तत्र अकृतवर्णः नाम कश्चित् धर्मराजं परशुरामकथाम् उक्तवान् ।

हैहयवंशे जातः कार्तवीर्यः दत्तात्रेयस्य वरप्रसादात् सहस्रं बाहून् सम्पाद्य बलमदेन अन्धः सन् लोकपीडाम् आरब्धवान् ।



कदाचित् सः परशुरामस्य पितुः जमदग्नेः समीपं गत्वा तदीयम् आश्रमं ध्वस्तीकृत्य तस्य होमधेनुं ग्रहीतुं प्रयत्नं कृतवान् । आश्रमं प्रत्यागतः परशुरामः प्रवृत्तं सर्वं ज्ञात्वा महता क्रोधेन गत्वा कार्तवीर्यं युद्धे संहृतवान् । अथ कदाचित् कार्तवीर्यपुत्राः जमदग्नेः आश्रमम् आगत्य एकाकितया स्थितस्य जमदग्नेः कण्ठं छित्त्वा प्रतिगतवन्तः । एतस्मात् महान्तं क्रोधं प्राप्य परशुरामः एकविंशतिवारं प्रपञ्चपर्यटनं कृत्वा दृष्टिगोचरीभूतान् सर्वान् क्षत्रियान् निर्दयं संहृतवान् ।

पाण्डवाः यदा प्रभासतीर्थं गताः तदा तेषाम् आगमनवार्ता कृष्णादिभिः श्रुता । ततः कृष्णबलरामादयः यादवप्रमुखाः च पाण्डवदर्शनार्थं प्रभासतीर्थम् आगतवन्तः । यादवाः धर्मराजम् उक्तवन्तः यत् पाण्डवाः युद्धे कौरवान् संहृत्य राज्यभारं निर्वक्ष्यन्ति इति ।

द्वारकां प्रति यादवानां प्रतिगमनस्य अनन्तरं पाण्डवाः तीर्थयात्राम् अनुवर्तितवन्तः ।

स च कश्चन पवित्रः प्रदेशः । पुण्यतमेषु स्थलेषु श्रेष्ठत्वेन परिगण्यते स्म स च प्रदेशः । तत्र पाण्डवाः नरकासुरस्य अस्थिपञ्जरेण निर्मितं पर्वतं दृष्टवन्तः । ततः प्रस्थिताः ते यावत् गन्धमादनपर्वतं प्राप्तवन्तः तावता महान् वायुः तत्र उत्पन्नः । तत्कारणतः उत्पन्नायाः धूलेः परिणामतः स च प्रदेशः अन्धकारमयः जातः । मेघगर्जनं तडितः स्फुरणं च आरब्धम् । धाराकारवृष्टिः अपि आरब्धा । वृष्ट्यादिभ्यः आत्मनः रक्षणार्थं महत् कष्टम् अनुभूतवन्तः पाण्डवाः । प्रातःकाले वृष्टिः उपशान्ता ।

वृष्टिकारणतः शैत्यकारणतः निरन्तरसञ्चारकारणतः च गच्छन्ती एव द्रौपदी मूर्च्छां गता । शिलादीनाम् उपरि यथा पतनं न स्यात् तथा तां गृहीत्वा नकुलः उच्चध्वनिना धर्मराजादीन् आहूतवान् । धर्मराज-भीम-सहदेवादयः धावन्तः तत्र आगतवन्तः । द्रौपद्याः दुरवस्थां दृष्ट्वा सर्वे दिग्भ्रान्ताः ।

धर्मराजः द्रौपद्याः शिरः स्वस्य अङ्के निधाय बहुधा अश्रूणि स्रावितवान् । अन्ये द्रौपद्याः उपचारं कृतवन्तः । स च मार्गः अपायबहुलः आसीत् । अग्रे गमनं नितरां कष्टकरम् आसीत् । अतः भीमः पुत्रं

घटोत्कचं स्मृतवान् । क्षणाभ्यन्तरे एव सहचरैः राक्षसैः सह घटोत्कचः तत्र प्रत्यक्षः अभवत् । सः पाण्डवान् द्रौपदीं च स्वस्कन्धे उपवेशितवान् । अन्यान् राक्षसाः स्वस्कन्धे आरोपितवन्तः ।

एवं प्रयाणं वेगेन अनुवृत्तम् । अग्रे गच्छन्तः ते कैलाससमीपे स्थितस्य बदरिकाश्रमस्य पार्श्वे प्रवहन्त्याः गङ्गानद्याः तीरे राक्षसानां स्कन्धात् अवतीर्य गङ्गायां स्नानं कृतवन्तः । विश्रान्त्यर्थं तत्रैव तात्कालिकवसतिं कल्पितवन्तः च ।

षष्ठे दिने वायुना आनीयमानः कश्चन अपूर्वः सुगन्धः तैः आघ्रातः । ततः अल्पे एव काले तेषां पुरतः एकं पुष्पं पतितम् । तच्च सहस्रदलोपेतं रक्तकमलम् आसीत् । तत् अतिसुन्दरं सुगन्धयुक्तं च आसीत् ।

द्रौपदी तत् पुष्पम् उन्नीय दृष्ट्वा तेन वशीभूता सती भीमम् उद्दिश्य - ''एतत् पुष्पम् अहं धर्मराजाय उपायनीकरोमि । एतादृशं पुष्पम् अस्माकं काम्यकवने अपि विकसेत् इति मम अपेक्षा । किं भवान् एतज्जातीयं सस्यम् आनीय दातुं शक्नुयात् ?'' इति पृष्टवती ।

द्रौपद्याः अपेक्षायाः पूरणार्थं भीमः गदां धनुर्बाणादिकं च गृहीत्वा गन्धमार्गम् अनुसरन् गतवान् । कोकिलानां गानं, पक्षिणां कलरवम्, नदीनां मञ्जुलनिनादं च शृण्वन्, अवरोधभूतान् वृक्षान् कर्तयित्वा पातयन्, लताश्च अपसारयन्, मध्ये मध्ये सिंहनादं कुर्वन् सुदूरं गतवान् सः । एवं गच्छता तेन एकं कदलीवनं प्राप्तम् । तत्र विहरन् सः पुनरपि सिंहनादं कृतवान् । ततः भीताः केचन जलपक्षिणः उड्डीय आकाशमार्गं गतवन्तः । एतस्मात् भीमः ऊहितवान् यत् अनतिदूरे जलाशयः कोऽपि अस्तिं इति । ततः सः तं जलाशयं प्राप्य तत्र स्नात्वा कदलीवनमार्गेण अग्रे गत्वा पुनरपि सिंहनादं कृतवान् ।

तस्मिन् कदलीवने हनूमान् निवसति स्म । एतं सिंहनादं श्रुत्वा सः ऊहितवान् यत् एतस्य कर्ता भीमः एव इति । भीम-दर्शनकुतूहलेन सः स्वपुच्छं मार्गे प्रसार्य शयानः उच्चैः गर्जनं कृतवान् ।

एतं शब्दं श्रुत्वा आश्चर्यम् अनुभवन् भीमः हनूमतः समीपम् आगतवान् ।

- (अनुवर्तते)



# र स वा र्ताः

## गजकण्ठे तरङ्गप्रेषकयन्त्रम्

अरण्ये सञ्चरतां गजानाम् अभिज्ञानं कथम् ? ते सर्वदा सञ्चरन्तः भवन्ति इत्यतः कः कुत्र कथं व्यवहरति इति ज्ञानं कष्टकरम् एव खलु ? अतः इदानीं गजस्य कण्ठे तरङ्गप्रेषकयन्त्रं संयोज्यते । एतस्मात् गजस्य सञ्चारः कुत्र भवति इति सुलभतया ज्ञातुं शक्यते । अतः एव पश्चिमबङ्गालराज्ये जल्दपारा-प्राणिसङ्ग्रहालय-जनाः गजाम् अनुसृत्य गच्छते गजाय मादकद्रव्यं दत्त्वा अचेतनतां सम्पाद्य तस्य कण्ठे तरङ्गप्रेषकयन्त्रं योजितवन्तः । ततः सचेतनतां गतः गजः निर्गतः । बलवन्तं गजम् अनुसृत्य तिष्ठति गजसमूहः । अतः गजानां सञ्चारः कुत्र भवन् अस्ति इति ज्ञानम् इदानीं न कष्टकरं वन्यमृगशाखायाः कृते । पञ्चमवारं गजकण्ठे तरङ्गप्रेषकयन्त्रं योजितम् । इतः पूर्वम् एकलगजेषु तरङ्गप्रेषकयन्त्रं योजितम् आसीत् ।

## अतिवेगवान् उष्ट्रः

'बिण्टि होम् लोल्'नामकः उष्ट्रः ३,९०,००० डालर्मूल्येन (१३७ कोटि-रूप्यकमूल्येन) विक्रीतः अभवत् । बहुषु गल्फ्देशेषु उष्ट्रस्पर्धा जनप्रियक्रीडा । ओमन्प्रदेशे वेगेन धावने समर्थाः उष्ट्राः सन्ति । एते उष्ट्राः प्रायः ८०० डालर्मूल्येन विक्रीताः भवन्ति । इतः पूर्वं २,६०,०००रू.मूल्येन कश्चन उष्ट्रः विक्रीतः आसीत् । किन्तु इदानीम् अत्यधिकमूल्येन, तन्नाम ३,९०,००० डालर्मूल्येन विक्रीतं 'बिण्टि'उष्ट्रं युनैटेड् अरब् एमिरेट्स्सम्बन्धी कश्चन अज्ञातः वणिक् क्रीतवान् । 'अतिवेगेन धावने समर्थः एषः' इति भावयति सः वणिक् । अतः एव 'अतिवेगवान् उष्ट्रः' इति तं निर्दिशन् सः सन्तोषम् अनुभवन् अस्ति इति श्रूयते ।

## अपूर्वमूल्येन चित्रविक्रयणम्

लण्डन्नगरीया सुप्रसिद्धा सौथ् बीस् एक्शन् संस्था गतस्य अक्टोबर्मासस्य ८ दिनाङ्के भारतीयैः कलाविद्भिः चित्रितानां १५० चित्राणां विक्रयणार्थं व्यवस्थां कृतवती आसीत् । आ राजारविवर्मणः (१८४८-१९०६) आहुसेनं सर्वेषां प्रसिद्धभारतीयकलाकाराणां अनेकानि चित्राणि प्रदर्शनार्थं स्थापितानि आसन् । प्रथमदिने विक्रयणार्थं स्थापितेषु दशचित्रेषु अष्ट रविवर्मणः एव आसन् । किञ्चन चित्रं (२,८०,००० रूप्यकमूल्यकं) सघोषविक्रयणे १४,१६, ८०० रूप्यकमूल्येन विक्रीतम् अभवत् । अत्यधिकमूल्येन विक्रीतं चित्रम् एतदेव । रविवर्मणः अन्यचित्राणां (७) विक्रयणतः ११,२०,२०० रूप्यकाणि प्राप्तानि । रवीन्द्रनाथवर्येण चित्रितम् एकं चित्रं ९,१३,०४० रूप्यकैः विक्रीतम् अभवत् । हुसेनचित्राणि अधिकमूल्येन न विक्रीतानि । एतस्य विक्रयणस्य एतत् वैशिष्ट्यं यत् एतानि चित्राणि क्रीतवत्सु अनिवासिभारतीयाः एव अधिकाः ।

## यन्त्रमानवः आरक्षकः 'म्याक्'

क्यालिफोर्निया-शान्जोन्-आरक्षकविभागे कश्चन यन्त्रमानवः अधिकारिपदं स्वीकृतवान् अस्ति । तस्य नाम 'म्याक्' इति । अन्ये आरक्षकाः इव एषः अपि अक्टोबर्मासे पदग्रहणं कृतवान् । एषः 'म्याक्' मार्गेषु अटन् 'अपराध-निग्रहः कथं करणीयः' इति जनान् बोधयति ।



चन्दमामानुबन्धः - १७

अस्मद्देशीया वृक्षसम्पत्

# बिल्ववृक्षः

अस्माकं देशे पवित्रतमत्वेन परिगण्यमानेषु वृक्षेषु 'बिल्वः' अन्यतमः । शिवस्य आराधनावसरे बिल्वपत्राणाम् उपयोगः क्रियते । बिल्वपत्राणि मृदूनि कृशानि च भवन्ति । शिवालयस्य अङ्गणेषु महत्सु उद्यानेषु च एते वृक्षाः दृश्यन्ते । बिल्ववृक्षाः आरोपणं विना अपि वर्धन्ते । बिल्वफलम् अपि पवित्रतमत्वेन परिगण्यते । एतत् फलं सम्पत्तेः समृद्धेः च प्रतीकम् इत्यपि परिगण्यते । अतः एव एतस्य फलस्य 'श्रीफलम्' इत्यपि नाम ।

बिल्ववृक्षः हिन्दीभाषया, मराठी-भाषया, बङ्गालीभाषया च 'बेल्' इति, गुजरातीभाषया 'बिली' इति, तमिळुभाषया मलयाळभाषया च 'विल्वम्' इति, तेलुगुभाषया 'मारेडु' इति च निर्दिश्यते ।

सर्वदा अपि हरिद्वर्णेन शोभमानाः बिल्ववृक्षाः दशमीटरौन्नत्यं यावत् वर्धन्ते । वृक्षस्य त्वक् अस्थूला कण्टकयुक्ता च भवति । शाखाः ग्रन्थियुक्ताः भवन्ति । वक्राकारिकाः अपि भवन्ति ताः । हेमन्तऋतौ एतद्वृक्षीयाणि पर्णानि पतन्ति । वसन्तकाले बिल्ववृक्षः पल्लवितः भवति । हरित-श्वेतवर्णाभ्यां युक्तानि एतद्वृक्षीयाणि पुष्पाणि गन्धं प्रसारयन्ति । बिल्वफलस्य आवरणं किञ्चिदिव दृढं भवति । अन्तः स्थितः सारः खादनयोग्यः भवति । एतं सारं संशोष्य शर्करया तक्रेण च मिश्रीकृत्य ग्रीष्मकाले शीतलपानीयं निर्मीयते । बिल्ववृक्षस्य फलानि, पर्णानि, त्वक्, मूलानि च औषधीयगुणयुक्तानि भवन्ति । बिल्ववृक्षाः समग्रे भारते दृश्यन्ते ।

नारङ्ग-जम्बीरवृक्षाः इव बिल्ववृक्षः अपि 'रूटासि'जातीयः अस्ति ।



अस्मद्देशीयाः ऋषयः

# आस्तिकः

जरत्कारु-मानसादेव्योः पुत्रः आस्तिकः च्यवनमहर्षितः विद्याम् अधिगृहीतवान् । मानसादेवी कश्यपस्य पुत्री । सर्पाणां विषये अधिकारः आसीत् तस्याः ।

कदाचित् सर्पाणां महती विपत् आगता । कदाचित् अर्जुनस्य पौत्रः परीक्षित् मृगयार्थम् अरण्यं गतवान् आसीत् । तेन अनुसृतः मृगः कश्चन शमीकमुनेः आश्रमस्य दिशि गतः । तम् अनुसृत्य गतः परीक्षित् मुनिसमीपं गत्वा - ''मृगः कुत्र गतः ?'' इति पृष्टवान् । ध्यानमग्नः शमीकः उत्तरं किमपि न दत्तवान् ।

एतस्मात् कुपितः राजा संयमहीनः सन् समीपस्थं मृतं सर्पम् उन्नीय मुनेः कण्ठे स्थापितवान् । एतत् दृष्टवान् शृङ्गी नाम शमीकपुत्रः - ''अहङ्कारी एषः सप्तदिनाभ्यन्तरे सर्पेण दष्टः भवतु'' इति शापं दत्तवान् । क्षणकालानन्तरं परीक्षित् स्वकृत्यस्य विषये पश्चात्तापम् अनुभूतवान् ।

सर्पात् आत्मनः रक्षणार्थं सः अभेद्यं भवनं निर्माय तत्र वासम् आरब्धवान् । भवनं परितः रक्षकभटाः अहोरात्रं रक्षन्तः आसन् । तथापि तक्षकः नाम राक्षसः कीटरूपेण फलं प्रविश्य राज्ञः समीपं गतवान् एव । सप्तमे दिने राजा खादनार्थं यदा फलं कर्तितवान् तदा ततः बहिः आगतः तक्षकः दंशनेन राजानं मारितवान् ।

तक्षकस्य कृत्यात् नितरां क्रुद्धः परीक्षित्पुत्रः जनमेजयः 'सर्पवंशम् एव निर्मूलयिष्यामि' इति प्रतिज्ञां कृत्वा सर्पयागम् आरब्धवान् । मन्त्रप्रभावात् सुदूरस्थाः अपि सर्पाः आकृष्टाः सन्तः होमाग्नौ पतन्तः मृताः अभवन् । तदा भीतः तक्षकः इन्द्रस्य सिंहासनस्य पादम् आलिङ्ग्य स्थितवान् । तथापि सर्पयागस्य मन्त्रस्य प्रभावतः इन्द्रसहितेन सिंहासनेन सह तक्षकः होमस्थलं प्रति आकृष्टः अभवत् ।

एतत् दृष्ट्वा दिग्भ्रान्ताः देवाः मानसादेवीं शरणं गतवन्तः । तदा मानसादेवी,सर्पयागं स्थगयतु, इति पुत्रम् आस्तिकं सूचितवती ।

आस्तिकः जनमेजयस्य समीपम् आगतवान् । विद्याविनयादिकं प्रदर्श्य सः जनमेजयं तोषितवान् । सन्तुष्टः जनमेजयः आस्तिकम् उक्तवान् - ''यत् अपेक्ष्यते तत् प्रार्थयतु'' इति । तदा आस्तिकः - ''सर्पयागं स्थगयतु'' इति प्रार्थितवान् । ततः सर्पयागः स्थगितः । तक्षकः तत्कुलीयाः केचन च सजीवं स्थितवन्तः ।

'आस्तिकः भक्त्या स्मृतः चेत् सर्पभयम् अपगतं भविष्यति' इत्यस्ति जनानां विश्वासः ।



# भवन्तः जानन्ति वा ?

१. 'वन्दे मातरम्' इत्येतस्य गीतस्य रचयिता कः ?
२. स्वतन्त्रदेशेषु लघुतमः देशः कः ?
३. सूर्यं परितः कति ग्रहाः भ्रमन्ति ?
४. का कुल्या इग्लेण्ड्देशं युरोपखण्डात् पृथक्करोति ?
५. भारतस्य राष्ट्रियं पुष्पं किम् ?
६. 'मिकी मौस्' 'डोनाल्ड् डक्' इत्येतयोः सृष्टिकर्ता कः ?
७. विदेशीयवस्तूनां विषये विधीयमानः करः कः ?
८. अमेरिकादेशस्य विनिमयद्रव्यस्य नाम किम् ?
९. अनुवैद्यवृत्तेः स्थापकः कः ?
१०. भारतस्य शासकाङ्गस्य सभाद्वयस्य नाम किम् ?
११. चतुरङ्गफलके कति चतुरस्त्राणि भवन्ति ?
१२. सूर्यरश्मितः किं जीवसत्त्वं प्राप्यते ?
१३. अधिकप्रमाणेन सुवर्णं कस्मिन् देशे प्राप्यते ?
१४. श्वेतध्वजः कस्मिन् प्रसङ्गे उपयुज्यते ?
१५. सौरमण्डलस्थः अतिमहान् ग्रहः कः ?
१६. 'भारतस्य नैटिङ्गेल्' इति का निर्दिश्यते ?
१७. पशुषु अत्युन्नतः कः ?
१८. ओलम्पिक्क्रीडाः कतिषु वर्षेषु एकवारं प्रवर्तन्ते ?

## उत्तराणि

१. बङ्किमचन्द्रचटर्जी ।
२. रोमप्रदेशस्था वाकटिन्नगरी ।
३. भूमिम् अविहाय नव ।
४. इंग्लीष्कुल्या ।
५. कमलम् ।
६. वाल्ट् डिस्नी ।
७. 'कस्टम्स् ड्यूटी' इत्येषः ।
८. डालर् ।
९. फ्लारेन्स् नैटिङ्गेल् ।
१०. लोकसभा राज्यसभा चेति ।
११. ६४ कृष्णवर्णीयानि, ३६ श्वेतवर्णीयानि च चतुरस्त्राणि भवन्ति ।
१२. 'डि'जीवसत्त्वम् ।
१३. दक्षिणाफ्रिकादेशे ।
१४. सन्धिप्रस्तावप्रसङ्गे ।
१५. गुरुः ।
१६. सरोजिनी नायडु ।
१७. चित्रोष्ट्रः (जिराफे)
१८. चतुर्षु वर्षेषु एकवारम् ।

# महादोषः कः ?

अमृतपुरनिवासी चन्द्रचूडः नित्योपयोगिवस्तूनि क्रेतुं नगरं गच्छन् आसीत् । मध्येमार्गं तस्य पादरक्षा छिन्ना । सः गच्छन् एव चिन्तितवान् - 'नगरे अद्य मया नूतना पादरक्षा क्रेतव्या' इति ।

ततः अग्रे गतवान् चन्द्रचूडः । मध्येमार्गं तेन कश्चन देवालयः दृष्टः । देवालयात् अनतिदूरे स्थितस्य आपणस्य पुरतः पङ्क्तिरूपेण पादरक्षाः स्थापिताः आसन् ।.ताः दृष्ट्वा चन्द्रचूडः - 'नगरप्राप्तितः पूर्वम् एव पादरक्षा क्रेतव्या' इति निश्चित्य आपणसमीपं गतवान् । तत्र एकं फलकम् आसीत् - 'पादरक्षायुगलाय चत्वारः आणकाः' इति । 'दशाधिकरूप्यकमूल्यकाः पादरक्षाः एतावता अल्पमूल्येन प्राप्यन्ते खलु !' इति चिन्तयन् आश्चर्यम् अनुभवन् एव चन्द्रचूडः उत्तमं पादरक्षायुगलं चितवान् । ते पादरक्षे पादे सम्यक् युज्येते स्म । चन्द्रचूडः चतुरः आणकान् आपणिकाय दातुम् उद्युक्तः ।

तदा आपण्मिकः चन्द्रचूडं सन्देहेन पश्यन् - ''एतत् पादरक्षायुगलं न भवदीयम् । एतत् तु आपणिकस्य रामभद्रस्य । भवान् अत्र पादरक्षां स्थापयित्वा गतवान् न स्यात् खलु !'' इति उक्तवान् ।

चन्द्रचूडः झटिति पादरक्षां परित्यज्य - ''श्रीमन् ! न अहं चोरः । भवतः आपणस्य फलकं माम् अवञ्चयत् । भवतः सुशिक्षितता यदि स्यात् तर्हि एषः दोषः न अभविष्यत्'' इति उक्तवान् ।

तावता तत्र आगतः रामभद्रः स्वस्य पादरक्षां धरन् - ''अशिक्षितताकारणतः अत्र अल्पः दोषः जातः स्यात् । किन्तु सुशिक्षिताः अपि चतुर्भिः आणकैः पादरक्षायुगलं क्रेतुं शक्यते इति चिन्तयन्ति यत् तत् तु महते आश्चर्याय'' इति उक्त्वा ततः निर्गतवान् ।





# अमावास्यापिशाचाः

रङ्गपुरस्य श्रीरङ्गस्य कमलापुरस्य कमलायाः च विवाहः अभवत् । श्रीरङ्गस्य मातापितरौ बाल्ये एव दिवं गतौ आस्ताम् । तस्य पोषिका पितामही अपि दिवं गता आसीत् । परम्पराप्राप्तां भूमिं कृष्यर्थम् अन्यस्मै दत्तवान् आसीत् श्रीरङ्गः । ततः प्राप्तेन आयेन सः सुखेन दिनानि यापयन् आसीत् ।

कमलायै नूतनं गार्हस्थ्यजीवनं विशेषतः अरोचत । श्वश्र्वाः पीडा तु न आसीत् गृहे । पतिः पत्नी च सन्तोषेण कालं यापयन्तौ आस्ताम् । श्रीरङ्गस्य पार्श्वगृहे भाटकार्थं कान्तानामिका काचित् आसीत् । सा एतयोः सन्तोषं निरातङ्कजीवनं च न सहते स्म । 'एतयोर्मध्ये कलहः उत्पादनीयः' इति चिन्तयित्वा सा प्रतिदिनं श्रीरङ्गम् अधिकृत्य कमलां पिशुनवचनानि वक्तुम् उद्युक्ता अभवत् ।

पाकं कर्तुं कष्टम् अनुभवन्तीं कमलां दृष्ट्वा सा वदति स्म - ''भवत्याः पत्युः उद्योगः कोऽपि नास्ति खलु ? किमर्थं तेन पाककरणे भवत्याः साहाय्यं न करणीयम् ?'' इति ।

कार्यं समाप्य उपविष्टवतीं कमलां वदति स्म सा - ''भवत्याः पतिः विवाहानन्तरम् आभूषणं वस्त्राणि वा न दापितवान् । वस्तुतः भवत्यां तस्य अनुरागः एव नास्ति'' इति ।

वस्त्रं प्रक्षालयन्तीं कमलां दृष्ट्वा - ''यदि भवत्याः पिता वरदक्षिणां दातुं सिद्धः स्यात् तर्हि भवत्या इतोऽपि उत्तमः पतिः प्राप्तः अभविष्यत्'' इति वदति स्म ।

कान्तायाः एतादृशानि वचनानि श्रुत्वा कमला कलुषितमनस्का जाता । प्रतिदिनं विना कारणं पत्या सह कलहम् आरब्धवती सा । पदे पदे पतिं तिरस्कारवचनानि वदति

'अनामिका'



स्म सा ।

अथ कदाचित् रात्रौ कान्तायाः वचनानि स्मरन्ती कमला निद्राम् एव न प्राप्तवती । किन्तु श्रीरङ्गः तु सशब्दं निद्रां कुर्वन् आसीत् । पत्युः निद्राम् असहमाना कमला श्रीरङ्गम् उत्थाप्य - ''भवान् घोरिकां स्थगयति, उत अहमेव कुत्रापि अन्यत्र गच्छामि ?'' इति कोपेन उक्तवती ।

अर्धरात्रे उत्थाप्य निद्राभङ्गं कृतवतीं पत्नीं दृष्ट्वा कोपेन - ''अर्धरात्रे भवत्याः गमनं किमर्थम् ? अहमेव कुत्रापि गच्छामि'' इति उक्त्वा गृहात् निर्गतवान् श्रीरङ्गः ।

पत्न्याः मूर्खतां चिन्तयन् श्रीरङ्गः ग्रामस्य अन्ते विद्यमानम् अरण्यं प्रविष्टवान् । अमावास्यायाः कारणतः समग्रम् अरण्यम् अन्धकारमयम् आसीत् । अन्धकारात् भीतः श्रीरङ्गः यावत् प्रत्यागन्तुम् उद्युक्तः तावता तेन किञ्चिद्दूरे विद्यमानस्य वटवृक्षस्य अधः दीपः दृष्टः । सः तं दीपप्रकाशम् अनुसृत्य गतवान् ।

वटवृक्षस्य अधः चत्वारः पिशाचाः विनोदकार्यक्रमे मग्नाः आसन् । मूर्खपत्न्याः सहवासस्य अपेक्षया एतेषां पिशाचानां सहवासः एव वरम् इति चिन्तयन् श्रीरङ्गः धैर्येण अग्रे गतवान् ।

तावति काले नायकपिशाचः - ''सर्वे श्रद्धया शृण्वन्तु । चतुर्णां मध्ये यः सर्वान् हासयति तेन एकम् अपूर्वम् उपायनं प्राप्यते'' इति उक्तवान् । क्षणाभ्यन्तरे एकः पिशाचः गीतं गीतवान् । अपरः नृत्यं कृतवान् । तृतीयः विनोदकणिकाम् अवदत् ।

तेषां कार्यक्रमस्य दर्शनात् श्रीरङ्गस्य सन्तोषः न अभवत् । सः तत्रैव वृक्षस्य अधः सुखेन शयानः निद्रां कुर्वन् घोरिकाम् आरब्धवान् ।

घोरिकायाः ध्वनिं श्रुत्वा पिशाचाः दिग्भ्रान्ताः सन्तः परितः दृष्टिं प्रसारितवन्तः । वटवृक्षस्य अधः निद्रां कुर्वन्तं श्रीरङ्गं दृष्ट्वा, चत्वारः पिशाचाः अपि मन्दं मन्दं श्रीरङ्गस्य समीपम् आगतवन्तः । घोरिकां कुर्वतः श्रीरङ्गस्य उदरम् उपरि अधः च लयबद्धतया सञ्चरति स्म । श्मश्रु अपि विचित्रगत्या कम्पते स्म । एतत् सर्वं दृष्टवतां तेषां पिशाचानां महान् हासः आगतः ।

पिशाचानां हासं श्रुतवतः श्रीरङ्गस्य जागरणम् अभवत् । तदा पिशाचनायकः -

"वयं प्रत्यमावास्यं विनोदकार्यक्रमम् आयोजयामः । एतस्मिन् दिने भवतः एव जयः । अद्य अस्माकं महान् सन्तोषः अभवत्" इत्युक्त्वा एकं कृष्णवर्णीयं शिरस्त्रं तस्मै दत्त्वा, अन्यैः सह ततः अदृश्यः अभवत् ।

तावति काले श्रीरङ्गस्य कोपः न्यूनः जातः आसीत् । सः गृहं प्रति प्रस्थाय प्रातःकाले गृहं प्राप्तवान् । तदा तस्य पत्नी गृहस्य पुरतः रङ्गवल्लीं लिखन्ती आसीत् । पतिं दृष्ट्वा सा तूष्णीं स्थितवती । 'मम मूर्खतां क्षाम्यतु इति वक्तव्यम्' इति चिन्तयन्ती आसीत् सा ।

"शत्रवः स्नेहिताः वा क्षमां याचन्ते चेत् शोभते । परन्तु पतिपत्न्योर्मध्ये क्षमा-याचनस्य प्रसक्तिः एव नास्ति" इति उक्तवान् श्रीरङ्गः ।

'मम मनसि प्रवर्तमानं चिन्तनम् एषः कथं ज्ञातवान् स्यात्' इति चिन्तयन्ती कमला आश्चर्यचकिता अभवत् ।

"भवत्याः चिन्तनं कथम् अहं ज्ञातवान् इति मया अपि न ज्ञायते । एतत् मयि अपि आश्चर्यं जनयति" इति पत्नीम् उक्तवान् श्रीरङ्गः ।

"शिरसि कृष्णवर्णीयं शिरस्त्रं किमर्थं धृतवान् भवान् ? एतत् असमीचीनं दृश्यते" इति वदन्तीं पत्नीं दृष्ट्वा श्रीरङ्गः शिरस्त्रं हस्तेन गृहीतवान् । यदा सः शिरस्त्रं निष्कासितवान् तदा पत्न्याः चिन्तनं न ज्ञातवान् । 'पिशाचाः मह्यम् अपूर्वं शिरस्त्रम् एव दत्तवन्तः' इति जानन् श्रीरङ्गः सन्तोषेण अरण्ये प्रवृत्तं समग्रं पत्नीं



निवेदितवान् ।

कमला किञ्चित्कालं चिन्तयित्वा - "आर्य ! एतत् शिरस्त्रम् अपूर्वम् अस्ति । एतत् नीत्वा महाराजाय ददातु । शत्रवः के ? मित्राणि कानि ? इति ज्ञात्वा सः शान्त्या राज्यभारं निर्वहतु नाम । एतत् शिरस्त्रं महाराजस्य विशेषोपयोगाय भविष्यति" इति उक्तवती ।

"भद्रे ! कमले ! भवत्यां यावती देशभक्तिः अस्ति, तावती भक्तिः प्रत्येकस्मिन् यदि भवति तर्हि राज्ये सुभिक्षा निश्चयेन भविष्यति" इति उक्त्वा श्रीरङ्गः तस्मिन् एव क्षणे ततः प्रस्थाय राजधानीं प्राप्तवान् । महाराजेन मिलित्वा अरण्ये प्रवृत्तं समग्रं निवेद्य कृष्णवर्णीयं शिरस्त्रं तस्मै भक्त्या समर्प्य ततः निर्गन्तुम् उद्युक्तः



अभवत् सः ।

तदा महाराजः तम् अवरुध्य – ''श्रीरङ्ग ! भवतः देशभक्तिः श्लाघनीया अस्ति । अतः भवता इतः उपायनम् अस्वीकृत्य न गन्तव्यम्'' इत्युक्त्वा स्यूतपरिमितानि सुवर्णनाणकानि तस्मै दत्तवान् ।

गृहम् आगत्य श्रीरङ्गः सुवर्णनाणकानि पत्न्यै दर्शितवान् । ''कमले ! एतत्सर्वं धनं किं कुर्मः ?'' इति तां पृष्टवान् च ।

तदा कमला – ''आर्य ! गृहे धनस्य स्थापनात् किमपि प्रयोजनं नास्ति । भवतः मित्राणि ये वाणिज्यं कुर्वन्ति तेभ्यः वाणिज्यरहस्यं सर्वं ज्ञात्वा भवान् अपि वाणिज्यस्य आरम्भं करोतु । कस्मिंश्चित् कार्ये भवान् मग्नः भवति चेत् भवतः जडत्वम् अपगतं भविष्यति'' इति उक्तवती ।

कान्ता अनुजायाः विवाहार्थं गतवती आसीत् । आगमनानुक्षणं सा श्रीरङ्गस्य वैभोगं दृष्ट्वा दिङ्मूढा अभवत् । सम्भाषणसमये सा कमलायाः मुखात् पिशाचानां रहस्यं ज्ञातवती ।

ततः सा रात्रौ पतिं कनकराजम् उद्दिश्य – ''अद्य अमावास्या । भवान् अरण्यं गत्वा घोरिकया तेषु पिशाचेषु सन्तोषं जनयतु । तदा ते भवते कृष्णवर्णीयं शिरस्त्रं दद्युः । तत् धृतं चेत् अन्येषां मनसि स्थितः विचारः ज्ञातुं शक्येत । किन्तु किं तेन ? भवान् तान् अदृश्यतां गन्तुम् उपकारकं शिरस्त्रम् एव प्रार्थयतु । तत् प्राप्य शिरसि धृत्वा अदृश्यतां गत्वा राजधानीं प्राप्य महाराजस्य समग्रां सम्पत्तिम् आनयतु । राज्ञ्याः वज्रमयः कण्ठहारः अपि अविस्मृत्य आनेतव्यः भवता'' इति आज्ञास्वरेण उक्तवती ।

तद कनकराजः भीत्या – ''घोरिकां कर्तुम् एव अहं न जानामि खलु ?'' इति उक्तवान् ।

तदा कान्ता – ''मनुष्यः मनः करोति चेत् यत्किमपि साधयितुं शक्नोति इति किं भवान् विस्मृतवान् ?'' इति कोपेन पृष्टवती । कनकराजः अनन्यगतिकतया अरण्यं गतवान् ।

अरण्ये सः पिशाचान् दृष्ट्वा भयेन कम्पमानः सन् उच्चैः आक्रन्दनं कृतवान् । तदा सर्वे पिशाचाः आश्चर्यचकिताः सन्तः तं परितः आगत्य स्थितवन्तः । तेषु कश्चित्– ''भोः, कः भवान् ? अत्र आगत्य अस्माकं

विनोदस्य भङ्गं किमर्थं कृतवान् भवान् ?'' इति कोपेन पृष्टवान् ।

कनकराजः इतोऽपि अधिकां भीतिं प्राप्य कम्पमानस्वरेण - ''एतत् आक्रन्दनं न, अपि तु घोरिका अस्ति'' इति उक्तवान् ।

तस्य उत्तरं श्रुत्वा सर्वे पिशाचाः हसितवन्तः । ''भवान् कश्चन महा-विदूषकः अस्ति । भवतु, भवान् अन्धकारे किमर्थम् एतावद्दूरम् आगतवान् ?'' इति पृष्टवन्तः ।

तदा कनकराजः भीतिवशात् कम्पमानस्वरेण - ''अदृश्यताकारकस्य स्त्रशिरस्य निमित्तम्'' इति उक्तवान् । 'स्त्रशिरम्' इत्येतत् अपूर्वं पदं श्रुत्वा सर्वे पिशाचाः पुनरपि हसितवन्तः ।

''भवान् जन्मतः एव विदूषकः अस्ति । भवतु । भवान् स्त्रशिरम् इति पदं प्रयुक्तवान् खलु ! तस्य कः अर्थः ?' इति पृष्टवान् पिशाचनायकः ।

तावति काले कनकराजः आत्मनि धैर्यं प्रपूर्य - ''स्त्रशिरम् इति न । शिरस्त्रम् इति पदं तत् । भीतिवशात् तथा उच्चारितं मया । मह्यम् अदृश्यताकारकं शिरस्त्रम् आवश्यकम्'' इति उक्तवान् ।

''अहो ! एषः वा विषयः ! स्वीकरोतु तावत्'' इति उक्त्वा वायौ हस्तं चालयित्वा पिशाचनायकः एकं श्वेतवर्णीयं शिरस्त्रं प्राप्य तत् कनकराजाय दत्तवान् । अनन्तरं - ''भोः ! अमावास्याद्वये यावान् विनोदः अस्माभिः प्राप्येत तावन्तं विनोदम् अद्यैव दत्तवान् अस्ति भवान् । अतः इतः तृतीया-मावास्यादिने पुनः आगच्छतु भवान्''



इत्युक्त्वा अन्यैः पिशाचैः सह ततः अदृश्यः अभवत् ।

कनकराजः उत्साहेन प्रातःकाले दुर्गं प्रविष्टवान् । शिरस्त्रस्य प्रभावेण रक्षकभटानां पुरतः एव गत्वा सः प्रासादं प्रविष्टवान् । तत्रत्यानि धनकनकादीनि सर्वाणि चोरितवान् । अनन्तरं सः अन्तःपुरं प्रविष्टवान् । तत्र राजा राज्ञी च गाढनिद्रायाम् आस्ताम् । प्रकोष्ठे कोणे महाराजस्य मुकुटं, राज्याः वज्रमयः कण्ठहारः च आसीत् । कण्ठहारं स्वीकृत्य निर्गन्तुम् उद्युक्तस्य कनकराजस्य मनसि विघोरः उत्पन्नः - 'पत्न्याः कृते एषः कण्ठहारः नीयते । किन्तु मम कृते किम् ?' इति । 'मम कृते एतत् मुकुटं भवतु' इति विचिन्त्य सः महाराजस्य मुकुटं स्वीकृत्य

शिरसि स्थापितवान् । गाम्भीर्येण बहिः आगतवान् च ।

शिरसि भारवहनस्य अभ्यासः न आसीत् इति कारणात् मुकुटधारणे कनकराजस्य क्लेशः अभवत् । दुर्गात् बहिः गमनसमये शिरसि भारम् असहमानः सः मुकुटं हस्तेन गृहीतवान् । तदा रक्षकभटाः तं दृष्ट्वा - "भोः ! कियत् धाष्टर्यं भवतः ? महाराजस्य मुकुटमेव चोरयित्वा नयन् अस्ति खलु भवान्" इति तर्जयन्तः तं बद्ध्वा महाराजस्य समीपं नीतवन्तः ।

कनकराजस्य अपादमस्तकं कम्पनम् आरब्धम् । यदा मुकुटं निष्कासितं तदा शिरस्त्रम् अपि हस्ते आगतम् आसीत् । स्वदौर्भाग्यं स्मरन् सः शिरः अवनमय्य महाराजस्य पुरतः स्थितवान् ।

महाराजः तं दृष्ट्वा - "एतादृशं दुस्साहसं कर्तुं एतं प्रेरितवान् कः स्यात् ?' इति ज्ञातुं श्रीरङ्गेन दत्तं शिरस्त्रं धृतवान् । तदा कनकराजं तर्जयन्त्याः कान्तायाः मुखं दृष्टं महाराजेन ।

तदा महाराजः कनकराजस्य पत्नीम् आनेतुं रक्षकभटान् प्रेषितवान् । भटाः ताम् आनीतवन्तः । महाराजः तां यदा भायितवान् तदा सा स्वदोषम् अङ्गीकृत्य कृतं सर्वं निवेदितवती । 'इदानीमेव राज्यात् बहिः गन्तव्यम्' इति आदिश्य तौ प्रेषितवान् राजा ।

प्रवृत्तं सर्वं ज्ञात्वा कमला - श्रीरङ्गम् उद्दिश्य - "अमावास्यापिशाचैः अस्माकं जीवनं सुखमयं कृतम् । कान्ता सदा भवन्तम् अधिकृत्य पिशुनवचनानि वदति स्म । तेषु अहं विश्वासं करोमि स्म । तेन मम अपि क्लेशः भवति स्म" इति उक्तवती ।

तदा श्रीरङ्गः - "शृणोतु भद्रे ! अविवेकपिशाचः यावत् अस्माकं मनसि वसति तावत् अन्ये पिशुनवचनैः अस्मासु विकारं जनयितुम् अर्हन्ति एव । अतः आदौ अस्माकं मनसः अस्माभिः अविवेक-पिशाचः निष्कासनीयः । ततः वयं सुरक्षिताः भवामः" इति पत्नीं बोधितवान् ।

तदारभ्य कमला सन्तोषेण पत्या सह जीवनं यापितवती ।





# कारणस्य कारणम्

कमलापुरनामकः कश्चन अग्रहारः आसीत् । तस्मिन् अग्रहारे धनञ्जयः नाम कश्चन महाधनिकः आसीत् । तस्य सुविशाला सुसमृद्धा कृषिभूमिः आसीत् । तस्य अद्वितीयपुत्री रुक्मिणी ।

रुक्मिणी यदा प्राप्तवयस्का जाता तदा धनञ्जयः तस्याः कृते वरान्वेषणाम् आरब्धवान् । 'शास्त्र-काव्यादिषु कृत-परिश्रमः सुन्दरः युवकः एव मम जामाता भवेत् । विवाहानन्तरं सः मद्गृहे एव निवसेत्' इति इच्छति स्म धनञ्जयः ।

धनञ्जयः यादृशम् इच्छति तादृशाः द्वित्राः युवकाः आसन् । परन्तु तेषु कोऽपि श्वशुरगृहे चिरवासं न इच्छति स्म । अथ कदाचित् रुक्मिणी मात्रा सह बन्धुगृहस्य विवाहार्थं पार्श्वग्रामं गतवती । तत्र मातुः दूरबन्धुः श्रीकान्तः आगतः आसीत् । सः यद्यपि धनिकः न आसीत्, तथापि उत्तम-लौकिकज्ञानी अस्ति इति सर्वे वदन्ति स्म ।

रुक्मिण्याः माता ज्ञातवती यत् रुक्मिणी श्रीकान्तम् इच्छति इति । एतेन यद्यपि सा सन्तुष्टा, तथापि, 'जामाता मद्गृहे एव चिरकालं वसेत्' इत्येतं पत्युः आशयं स्मृत्वा खिन्ना जाता । 'तथापि एकवारं प्रयत्नं करोमि' इति चिन्तयन्ती सा श्रीकान्तं पृष्टवती - ''वत्स ! भवतः विद्याभ्यासः समाप्तः खलु ? इतः परं किं करणीयमिति चिन्तितवान् भवान् ?'' इति ।

तदा श्रीकान्तः उक्तवान् - ''मम पित्रार्जिता लघुभूमिः अस्ति । तस्मात् यावत् प्राप्यते तावत् कुटुम्बपोषणाय न अलम् । अतः अधिकसम्पादनस्य आवश्यकता अस्ति एव मम । अत्र सर्वे मां 'गुरुकुलं चालयतु' इति वदन्तः सन्ति । अहमपि तथैव चिन्तयन् अस्मि'' इति ।

तत् उत्तरं श्रुत्वा रुक्मिण्याः माता खेदेन

'अनामिका'

उक्तवती – ''अहं भवतः दूरबन्धुः इत्येतं विषयं तु भवान् जानाति एव । यदि भवतः गृहजनाः अङ्गीकुर्वन्ति तर्हि भवन्तं जामातृरूपेण स्वीकर्तुम् अहम् इच्छामि । भवान् मम पुत्रीं रुक्मिणीं दृष्टवान् अस्ति एव खलु ?'' इति ।

तदा श्रीकान्तः हसन् – ''आम् । रुक्मिणीम् अहं दृष्टवान् अस्मि । किन्तु यः चिरकालं स्वगृहे वसेत् तादृशं जामातरम् एव इच्छति खलु तस्याः पिता ?'' इत्युक्तवान् ।

एकः मासः अतीतः । श्रीकान्तात् ऋते अन्यं न वृणोमि इति सुदृढं वदन्त्याः रुक्मिण्याः कारणतः, पत्न्याः अनुरोधन-कारणतः च धनञ्जयः श्रीकान्त-रुक्मिण्योः विवाहम् अङ्गीकृतवान्, विवाहं निर्वर्तित-वान् च । परन्तु तस्य मनसि – 'श्रीकान्तस्य अपमाननं जनानां पुरतः करणीयम्' इति अन्तःकोपः तु आसीत् एव ।

विवाहात् मासचतुष्टयस्य अनन्तरं दीपावलीपर्वनिमित्तं पत्न्या सह श्रीकान्तः श्वशुरगृहम् आगतवान् । एकस्मिन् दिने सायङ्काले देवालयस्य मण्डपे केचन जल्पनं कुर्वन्तः उपविष्टवन्तः आसन् । तेषु धनञ्जयः अन्यतमः । तदा तत्र श्रीकान्तः अपि आगतवान् ।

तदा धनञ्जयः तत्रत्यान् उद्दिश्य एवम् उक्तवान् – ''जनाः मम जामातरम् उत्तमं विवेकिनं च वदन्ति । परन्तु तस्य विषयं किमपि अहं न जानामि । इदानीं भवतां पुरतः अहं तत् ज्ञातुम् इच्छामि'' इत्युक्त्वा श्रीकान्तं पश्यन् – ''भवान् महाविद्यावान् । अतः मम एकः प्रश्नः अस्ति । कदाचित् आकाशे समूहरूपेण डयमानानां बकानां मुखात् मधुरसङ्गीतं श्रूयते खलु ? तत् कथम् ?'' इति पृष्टवान् ।



"सः तु प्रकृत्या दत्तः वरः" इत्युक्तवान् श्रीकान्तः ।

"वसन्तऋतौ निम्ब-तिन्त्रिणी-वृक्षादयः फल्लविताः भवन्ति । तस्य कारणं जानाति वा भवान् ?" इति पृष्टवान् धनञ्जयः ।

"सः अपि प्रकृतिमातुः प्रसादः एव" इत्युक्तवान् श्रीकान्तः ।

"मार्गपार्श्वे स्थितानां वृक्षाणां प्रकाण्डे बह्व्यः ग्रन्थयः भवन्ति । तस्य कारणं किम्" इति पृष्टवान् धनञ्जयः ।

तत् श्रुत्वा हसन् उक्तवान् श्रीकान्तः - "ताः ग्रन्थयः प्रकृतिकारणतः एव उद्भूताः भवन्ति" इति ।

तत् उत्तरं श्रुत्वा हसन् धनञ्जयः उक्तवान् - "यः अधिकं विद्याभ्यासं न कृतवान् सः अपि मम प्रश्नानां समीचीनम् उत्तरं दद्यात् । परन्तु भवान् योग्यानि उत्तराणि दातुं न शक्तवान् इति तु आश्चर्यस्य विषयः । बकानां सुश्राव्यसङ्गीतस्य कारणं तेषां दीर्घः कण्ठः । वसन्तऋतौ निम्ब-तिन्त्रिणी-वृक्षादयः फल्लविताः भवन्ति यत् तस्य कारणं तु भूमौ गभीरतया प्रसृतानि तेषां मूलानि एव । वृक्षाणां प्रकाण्डस्य ग्रन्थीनां कारणं तु धेनवः । ताः धेनवः प्रतिदिनं तत्र स्वशृङ्गैः कण्डूयन्ते । एतादृशानि सरलानि कारणानि सन्ति चेदपि सर्वेषां प्रश्नानां कृते अपि प्रकृतिरेव कारणम् इत्येतत् भवतः उत्तरम् आश्चर्यजनकम् अस्ति" इति ।

"यदि अत्र स्थिताः सर्वे ज्येष्ठाः अनुमन्यन्ते तर्हि अहं मम श्वशुरेण सह किञ्चित् निस्सङ्कोचं वार्तालापं कर्तुम् इच्छामि" इति विनयेन उक्तवान् श्रीकान्तः ।

सर्वेऽपि 'अस्तु' इति उक्तवन्तः ।

तदा श्रीकान्तः - "मण्डूकानां 'बेक्, बेक्' शब्दोच्चारणस्य कारणं किं तेषां दीर्घकण्ठः एव ? वसन्तऋतौ निम्बवृक्षः फल्लवितः भवति यत् तस्य कारणं भूमौ स्थितं तदीयं मूलम् एव वा ? श्वशुरस्य कण्ठस्य उपरि स्थितायाः ग्रन्थेः कारणं चतुष्पादानां शृङ्गाणि एव वा ?" इति पृष्टवान् ।

एतत् श्रुत्वा सर्वेऽपि हसितवन्तः । धनञ्जयः शिरः अवनमय्य मौनम् उपविष्टवान् ।



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां मार्च् - १९९७ मासे प्रकटयिष्यामः ।



S.G. SESHAGIRI



S.G. SESHAGIRI

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'नवम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **मातुः सकाशात् क्रियते मया अक्षराभ्यासः ।**

द्वितीयचित्रम् - **स्वयमेव क्रियते अस्माभिः नृत्याभ्यासः ।**

प्रेषकः - आर्. कैलासम्, १४, लक्ष्मीस्ट्रीट्, वेस्ट् माम्बुळम्, चन्नै - ३३ (त.ना.)

---

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ७२-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**डाल्टन् एजन्सीस्,** चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process private Ltd., 188, N.S.K. Salai, Madras - 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS. Chandamama Buildings, Vadapalani, Madras - 600 026 (India), Controlling Editor: NAGI REDDI.

अपने प्यारे चहेतें के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा



प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 129.00   वायु सेवा से रु. 276.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 135.00   वायु सेवा से रु. 276.00

अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.